॥ श्रीः ॥

# सारस्वतव्याकरणम् ।

## संज्ञाप्रकरणम् ।

[1]प्रणम्य परमात्मानं बाल धीवृद्धिसिद्धये ।
सारस्वतीमृजुंकुर्वे प्रक्रियांनातिविस्तराम् ॥ १ ॥
इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः ॥
प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं नरः कथम् ॥ २ ॥
तत्र तावत्संज्ञा संव्यवहाराय संगृह्यते ।

### अइउऋऌसमानाः ।

अनेन प्रत्याहारग्रहणाय वर्णाः परिगणयन्तेतेषां समानसंज्ञा च विधीयते । नैतेषु सूत्रेषु संधिरनुसंधयोऽविवक्षितत्वात् । 'विवक्षितस्तु संधि-

---

१--अथ श्री मत्परमहंस परिव्राजकाचार्योऽनुभूतिस्वरूपो विघ्न समूह शान्त्यर्थं भगवन्नमस्कृति पूर्वकं सारस्वतीं प्रक्रियां चिकीर्षुः प्रस्तावना रूपेण स्तुति रूपं मंगलमादावाह । तत्र स एव कर्ता चाध्याहार्यः ।

भवति, इति नियमात् । लौकिकप्रयोगनिष्पत्तये समयमात्रत्वाच्च ॥

## ह्रस्वदीर्घप्लुतभेदाः सवर्णाः ॥

एतेषां ह्रस्वदीर्घप्लुतभेदाः परस्परं सवर्णा भण्यन्ते । लोकाच्छेषस्य सिद्धिरिति वक्ष्यति । ततो लोकत एव ह्रस्वादिसंज्ञा ज्ञातव्याः । [१]एकमात्रो ह्रस्वः । द्विमात्रो दीर्घः । त्रिमात्रः प्लुतः । व्यंजनं चार्धमात्रकम् । एषां मन्येऽप्युदात्तादि भेदाः सन्ति । उच्चैरुपलभ्यमान उदात्तः । नीचैरनुदात्तः । समवृत्या स्वरितः । ए ऐ ओ औ संध्यक्षराणि । एषां ह्रस्वा न सन्ति ॥

## उभये स्वराः ॥

अकारादयः पञ्च एकारादयश्चत्वार इत्युभये स्वरा उच्यन्ते ॥

---

१—एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्येत । त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्ध मात्रकम् ॥ चाषस्तु वदते मात्रां द्विमात्रं त्वेव वायसः । शिखी रौति त्रिमात्रं तु नकुलस्त्वर्ध मात्रकम् ॥

## अवर्ज्जा नामिनः ॥

अवर्णवर्ज्जाः स्वरा नामिन उच्यन्ते । अनुक्रा[१]-न्तास्तावत्स्वराः । प्रत्याहारान्[२] जिघृक्षविषया व्यंजनान्य[३]नुक्रामति । हयवरल, ञणनङम, झढध-घभ, जडदगब, छठथखफ, चटतकप, शषसेति ॥४॥

## आद्यन्ताभ्याम् ॥५॥

प्रत्याहारंजिघृक्षया आद्यन्ताभ्यामेते वर्णा ग्राह्याः । आदिवर्णोऽन्त्येनसह गृह्यमाणस्तन्नाम प्रत्याहारः । तथाहिअकारोबकारेणसहगृह्यमाणा-ऽबप्रत्याहारः । स च अइउऋलृएऐओऔहयवरल-ञणनङमझढधघभ जडगदब इत्येतावत्संख्या[४]कः संपद्यते । चटतकप इति चपप्रत्याहारः जडदगब इति जब प्रत्याहारः । झढधघभ इति झभप्रत्याहारः ञणनङम इति ञम प्रत्याहारः । एवं यत्र यत्र

---

१—अ इ उ ऋ लृ ए ऐ ओ औ । इति नवस्वराः । २-प्रति-कार्यमाह्रियन्ते इति प्रत्याहारास्तान् । प्रत्याहारायेत्युक्तानि तथा स्युस्तया सूत्रेऽनुक्तान्यपि हादीनि व्यञ्जनक्रमेण संगृह्णाति । ४ इतिः-अब प्रत्याहारः ।

येन येन [१]प्रत्याहारेण कृत्यं स तत्र तत्र ग्राह्यः । संख्यानियमस्तु नास्ति ॥ ५ ॥

## हसा व्यञ्जनानि ॥६॥

हकारादयः सकारान्ता वर्णा हसा व्यञ्जनानि भवन्ति । [२]स्वरहीनं व्यञ्जनम् । तेष्वकारः सुखो-च्चारणार्थंत्वादित्संज्ञको भवति ॥ ६ ॥

## कार्यायेत् ॥७॥

प्रत्ययाद्यतिरिक्तः कस्मैचित्कार्यायोच्चार्यमाणो वर्ण इत्संज्ञको भवति । यस्येत्संज्ञा तस्य लोपः । प्रत्ययादर्शनंलुक् [३]वर्णादर्शनं लोपः । [४]वर्णविरोधो लोपश् । मित्रवदागमः । शत्रुवदादेशः । स्वरा-[५]नन्तरिता हसाः । संयोगाः । [६]कु चु टु तु पु वर्गाः [७]उकारः पंचवर्णपरिग्रहणार्थः ॥ ७ ॥

---

१—प्रत्याहाराणां संख्यानियमस्तु नास्ति । २—अकरादि-स्वररहितं स्वरेभ्योऽन्त्यं । ३—स्थानाद्भ्रशः । ४—संधिकार्यव-र्जनम् । ५—मध्ये स्वररहिता हसाःकेवलव्यञ्जनानि । ६-कु इत्यनेन क ख ग घ ङ इत्येव प्रत्येकमेते स्वीयपंचकग्राहकाः । ७—अवर्ज स्वराणां मध्ये ।

## अरेदोन्नामिनो गुणः ॥८॥

नामिनः स्थानिका अर् एत् ओत् एते गुण संज्ञका भवन्ति ॥ ८ ॥

## आरै औ वृद्धिः ॥ ६ ॥

आ आर् ऐ औ एते वृद्धिसंज्ञका भवन्ति ॥ ६ ॥

## अन्त्यास्वरादिष्टि ॥१०॥

अन्त्यो यःस्वरस्तदादिवर्णःटिसंज्ञकोभवन्ति ।१०।

## अन्त्यात्पूर्व उपधा ॥११॥

अन्त्याद्वर्णमात्रात्पूर्वो यो वर्णः स उपधासंज्ञको भवति । असंयोगादि[१]परो ह्रस्वो लघुः । विसर्गानुस्वार-संयोगादि-परो दीर्घश्च गुरुः ॥११॥

## मुखनासिकावचनोऽनुनासिकः ॥१२॥

मुखनासिकाभ्यामुच्चार्यमाणोवर्णोऽनुनासिकः । द्विविन्दुर्विसर्गः । शिरोविन्दुरनुस्वारः । अकुह विसर्जनीयानां कण्ठः । इचुयशानां तालुः । ऋटुर-

१—आदिशब्देन विसर्गानुस्वारे ।

षाणां मूर्धा । लृतुलसानां दन्ताः । उपूपध्मानी यानामोष्ठौ । ञमङणनानां नासिका च ऐदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । ᳵक ᳵख इति [1]जिह्वामूलीयः । ᳶप ᳶफ इत्यु-[2]पध्मानीयः । अं इत्यनुस्वारः । अः इति विसर्गः ।

॥ इति संज्ञाप्रक्रिया ॥

अधुना [3]स्वरसन्धिर्विधीयते ।

## इ यं स्वरे ॥१॥

इवर्णो यत्वमापद्यते स्वरे परे । दधि आनय इति स्थिते दध्य् आनय इति तावद्भवति ॥१॥

## हसेऽहसः ॥२॥

स्वरात्परो रेफहकारवर्जितो हसो हसे परे द्विर्भवति इति धकारस्य द्वित्वम् । पुनर्द्वित्वे प्राप्ते [नद्विरुक्तस्य द्विरुक्तिः] । द्वित्वविधानसामर्थ्याद् द्वावेव शिष्येते अन्ये हसा लुप्यन्ते ॥ २ ॥

१—ᳵ क ᳵ ख इति कखाभ्यां प्रागर्ध विसर्ग सदृशो जिह्वामूलीयः । २—ᳶ प ᳶ फ इति पफाभ्यां प्रागर्ध विसर्ग सदृशो उपध्मानीयः । ३ एकवारं कृतद्वित्वस्य ।

## झभे जबाः ॥ ३ ॥

झसानां झभे परे जबा भवन्ति। इति पूर्वधकारस्य दकारः [1]सवर्णत्वात् ॥ वर्ग्यो वर्ग्येण सवर्णः इति वचनात् यथासंख्यं वा वक्तव्यम् ॥ [स्वरहीनं परेण संयोज्यम्] दद्धयानयइति सिद्धम्। गौरी अत्र अई इति विशेषणान्न रेफस्य द्वित्वं किन्तु ॥ ३ ॥

## राद्यपो द्विः ॥ ४ ॥

स्वरपूर्वाद्रेफात्परो यपो द्विर्भवति। ([2]जलतुम्बिकान्यायेन रेफस्योर्ध्वगमनम्) गौर्य्यत्र। स्वर इत्यनुवर्तते। एवमन्यत्रापि। यत्र न सूत्राक्षरैः कार्यसिद्धिस्तत्र सर्वत्र सूत्रान्तरात् पदानुवृत्तिर्ज्ञातव्या। ग्रन्थभूयस्त्वभयान्नास्माभिर्लिख्यते ॥४॥

## उवम् ॥ ५ ॥

उवर्णो वत्वमापद्यतेस्वरे परे। मधु अत्रमद्ध्वत्र ।५।

## ऋ रम् ॥ ६ ॥

ऋवर्णोरत्वमापद्यते स्वरे परे। पितृ अर्थः पित्रर्थः ६

---

१—स्ववर्गस्थो वर्णः स्ववर्गस्थेन वर्णेन। २—यथा तुम्बा नित्यं जलोपरि तिष्ठति तद्वत् ॥

## लृ लम् ॥ ७ ॥

लृवर्णो लत्वमापद्यते स्वरे परे । लृ अनुबन्धः लनुबन्धः ॥ ७ ॥

## ए अय् ॥ ८ ॥

एकारो अय् भवति स्वरे परे । ने अनं नयनम् ।

## ओ अव् ॥ ९ ॥

ओकारो अव् भवति स्वरे परे । लो अनम् लवनम् । भो अति भवति [ गवादेरवर्णागमोऽक्षादौ वक्तव्यः ] गो अक्षः गवाक्षः । गो इन्द्रः गवेन्द्रः गो अजिनम् गवाजिनम् ॥ प्रऊढः प्रौढः । स्व ईरिणी स्वैरिणी । अक्ष उहिणी [1]अक्षौहिणी सेना । क्वचित्स्वरवद्यकारः । [2]यथाध्व परिमाणे गव्यूतिः । अन्यत्र गवां मिश्रीभावे गोयूतिः ॥ ९ ॥

## ऐ आय् ॥ १० ॥

ऐकार आय् भवति स्वरे परे । नै अकः नायकः १०

---

१—सा सेनाक्षौहिणी नाम खाणाष्टकद्विकैः २१८० गजैः । रथैश्चैभिर्हयैस्त्रिघ्नैः ६५६१० पञ्चघ्नैश्च १०८३५० पदातिभिः ।

२-क्रोशद्वयपरिमिताऽध्वा ।

## औ आव् ॥ ११ ॥

औकार आव् भवति स्वरे परे तौ इह ताविह ॥

## य्वोर्लोपश्च वा पदांते ॥१२॥

पदांते स्थितानामयादीनां यकारवकारयोर्लोपश्वा भवतिस्वरे परे तौ इहताविहता इह तेआगताः तयागताः । त आगताः । पटो इह पटविह पट इह । तस्मै एतत तस्मायेतत् तस्मा एतत् । लोपशि पुनर्नसन्धिः छन्दसि तु भवति । हे सखे इति हे सखयिति हे सख इति हे सखेति ॥ १२ ॥

## एदोतोऽतः ॥१३॥

पदान्ते स्थितादेकारादोकाराच्च परस्याकारस्य लोपो भवति । ते अत्र तेऽत्र । पटो अत्र पटोऽत्र १३

## सवर्णे दीर्घःसह ॥१४॥

सवर्णस्य सवर्णे परे सह दीर्घो भवति । श्रद्धा अत्र श्रद्धात्र । दधिइह दधीह । भानु उदयः भानूदयः । पितृ ऋणम् पितॄणम् । दण्ड अग्रंदण्डाग्रम्॥

अदीर्घो दीर्घतां याति नास्तिदीर्घस्यदीर्घता । पूर्व

---

१—बहुव्यापकम् सामान्य ।

दीर्घस्वरं हृस्वा परलोपो विधीयते ॥१॥ सामान्यशास्त्रतो नूनं विशेषो बलवान्भवेत् ॥ परेण पूर्वबाधो वा प्रायशो दृश्यतामिह ॥ २ ॥१४॥

अ इ ए ॥ १५ ॥

अवर्णं इवर्णे परे सह ए भवति । तव इदं तवेदम् । मम इदं ममेदम् । ([1]हलादेरीषादौ टेलोपो वक्तव्यः) हल ईषा-हलीषा ॥ लांगल ईषा लांगलीषा मनस् ईषा मनीषा । शक अन्धुः शकन्धुः । कर्क अन्धुः कर्कन्धुः । कुल अटा कुलटा । सीमन्-अन्तः सीमन्तः । केशवेशे । अन्यत्र सीमान्तः । पतत् अञ्जलिः पतञ्जलिः सार अंगः सारङ्गः ।

ओमि च ॥ १६ ॥

ओमि परे नित्यं टेर्लोपो भवति । अद्य ओम् अद्योम् ॥१६॥ उ ओ ॥ १७ ॥

अवर्णं उवर्णे परे सह ओ भवति । गंगा उदकम् गंगोदकम् । तीर्थं उदकं तीर्थोदकम् ।

---

१—हलीषा लाङ्गलीषा च मनीषाद्यो तथैव च । शकन्धुरथ कर्कन्धुः सीमन्तः कुलटा तथा । पतञ्जलिश्च सारंग एते प्रोक्ता हलादयः ।

## ऋ अर् ॥ १८ ॥

अवर्ण ऋवर्णे परे सह अर् भवति । तव ऋद्धिः तवर्द्धिः ॥ १८ ॥

## क्वचिदार् ॥ १९ ॥

अवर्ण ऋवर्णे परे सह क्वचिदार् भवति । ऋण ऋणं ऋणार्णम् [1]तृतीयासमासे चार् । सुखेन ऋतः सुखार्तः । शीतार्तः । दुःखार्तः । तृतीयेति किम् । परमर्तः ॥ १९ ॥

## ऌ अल् ॥ २० ॥

अवर्णः ऌवर्णो परे सह अल् भवति । तव ऌकारः तवल्कारः । (ऋऌवर्णयोर्मिथः सावर्ण्यं वा वक्तव्यम्) ॥ ❋ ॥ होतृ ऌकारः होल्ऌकारः होतृकारः ॥ ([2]रलयोः सावर्ण्यं वा वक्तव्यम्) ❋ परि अङ्कः पर्यङ्कः पल्यङ्कः ॥ २० ॥

## ए ऐ ऐ ॥ २१ ॥

अवर्ण एकारे ऐकारे च परे सह ऐकारो भवति

---

१--प्रवत्सतरकम्बलवसनार्णदशानामृणे । प्रार्णमित्यादि ।

२-रलयोर्डलयोश्चैव शसयो र्बवयोस्तथा । वदन्त्येषां च सावर्ण्यमलंकार विदोजनाः ॥

तव ऐषा तवैषा । तव ऐश्वर्यं तवैश्वर्यम् ॥ २१ ॥

## ओ औ औ ॥ २२ ॥

अवर्ण ओकारे औकारे च परे सह औकारो भवति । तव ओदनम् तवौदनम् । तव औन्नत्यम् तवौन्नत्यम् ॥ २२ ॥

## ओष्ठोत्वोर्वा समासे ॥२३॥

अवर्णस्य ओष्ठोत्वोः परयोर्वा सह ओत्वं भवति समासे सति । बिम्ब ओष्ठः बिम्बोष्ठः बिम्बौष्ठः । स्थूल ओतुः स्थूलोतुः स्थूलौतुः । समासे किम् तव ओष्ठः तवौष्ठः ॥ २३ ॥ इति स्वरसन्धिः ॥

अथ प्रकृतिभाव उच्यते ।

## नामी ॥ १ ॥

अदसः अमीशब्दः सन्धि न प्राप्नोति । अमी आदित्याः । अमी उष्ट्राः अमी एडकाः । अदसः इति किम् अमीरोगस्तद्वान् अमी अत्र अम्यत्र ॥ १ ॥

## ईवे द्वित्वे ॥ २ ॥

इ च ऊ च ए च । ईवे । ईकारान्त ऊकारान्त एका-

रान्तश्च शब्दोद्विते वर्तमानःसन्धि न प्राप्नोति [मणीवादिवर्जम् ❋] अग्नी अत्र । अद्रू अत्र माले आनय ? मणीवादीति किम् । मणी इव मणीव[1] । रोदसी इव रोदसीव । दम्पती इव दम्पतीव । जम्पति इव जम्पतीव ॥ २ ॥

## ओ निपातः ॥ ३ ॥

[2]आकार [3]ओकार निपात एकस्वरश्च सन्धि न प्राप्नोति । ओत्तमैरीत्तसेनत्वमामृतादेन्द्रताऽखिलैः । आ एवं सर्ववेदार्थ आ एवंसद्वचो हरेः॥१॥ ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमांतंङितं विद्याद्वाक्यस्मरणयोरङित् ॥ २ ॥ आ एवं किल मन्यसे न अत्र स्थातव्यम् । उ उत्तिष्ठ । अ-अपेहि इ-इन्द्रं पश्य ॥ ३ ॥

---

१—म्रियामणौ च तौ दृष्ट्वामकिर्वचनमब्रवीत् । मणीवोष्ठस्य लम्बेते प्रियौ वत्सतरौ मम ॥ १ ॥

२—आकारस्तुनिपातोयो ङिदङिद्दतोद्विधा । तत्रापि-घक्ङिदाकारः संधिं प्राप्नाति न, च ङित् ॥ आतिमैरीत्तसे इत्यादौ-यथा आ ईषदुत्तमः ओत्तमः-अत्र आङासह संधिः । आ ईत्तसे एत्तसे । आ अमृतात् । आमतात् । आ इन्द्रनः-ऐन्द्रतः । इत्यादिषु-ईषदादि योगे आङासह संधिः ।

३—अहो आहो उताहो च नो हो हंहो अथोरमे । मिथो युकाश्च आदेन्ताः निपाता अष्टधामताः ।

## प्लुतः ॥ ४ ॥

प्लुतश्च सन्धिं न प्राप्नोति । देवदत्त३एहि ॥४॥

## दूराद्धाने च टेः प्लुतः ॥ ५ ॥

दूराद्धाने गाने रोदने विचारे च टेःप्लुतोभवति।५।

## हैहयोरपि ॥ ६ ॥

हे ३ राम । राम । हे ३ ॥ ६ ॥

॥ इति प्रकृतिभावः ॥

अथ व्यंजनकार्यमुच्यते

## चपा अबे जबाः ॥ १ ॥

पदान्ते वर्तमानाश्चपा जबा भवन्त्यबे परे ।

षट् अत्र षडत्र । वाक् यथा वाग्यथा ॥ १ ॥

## ञमे ञमा वा ॥ २ ॥

पदान्ते वर्तमानाश्चपा ञमे परे ञमा वा भवन्ति । वाक् मात्रम् वाग्मात्रम् वाङ्मात्रम् । षट् मम षड्मम षण्मम ॥ २ ॥

## चपाच्छ शः ॥ ३ ॥

चपादुत्तरस्य शकारस्य छो[1] वा भवति अवे परे ।
वाक् शूर वाक्छूरः ॥ ३ ॥

## हो झभाः ॥ ४ ॥

चपादुत्तरस्य हकारस्य झभा वा भवंति । यद्वर्ग-
श्चपस्तद्वर्गगश्च[2] तुर्यो भवति । तत् हविः तद्धविः
तद्हविः । वाक् हरिः वाग्घरिः वाग्हरिः ॥४॥

## स्तोः श्चुभिः श्चुः ॥ ५ ॥

स्तोः सकारस्य तवर्गस्य च शकारेण चवर्गेण च
योगे शकारचवर्गौ यथासंख्येन भवतः । सका-
रस्य शकारः तवर्गस्य चवर्गः । कस्चरति
कश्चरति कस्शूरः कश्शूरः । तत् चित्रम् तच्चि-
त्रम् । तत् शास्त्रम् तच्छास्त्रम् ॥ ५ ॥

## न शात् ॥ ६ ॥

शकरादुत्तरस्य तवर्गस्य चुत्वं न भवति ।
विश् नः विश्नः । प्रश् नः प्रश्नः ॥ ६ ॥

## ष्टुभिः ष्टुः ॥ ७ ॥

स्तोः सकारतवर्गयोः षकारटवर्गाभ्यां योगे

---

१—छ इत्यविभक्तिकोनिर्देशः पदमध्येऽपि क्वचित् । २—झ
ढ ध घ भाना मन्वन्तरम् ।

ष्टुर्भवति सकारस्य षकारः । तवर्गस्य टवर्गः । कस् षष्ठः कष्षष्ठः ॥ कस् टीकते कष्टीकते । तत् टीकते तट्टीकते ॥ ७ ॥

## तोर्लि लः ॥ ८ ॥

तवर्गस्य लकारे परे लकारो भवति । तत् लुनाति तल्लुनाति । भवान् लिखति भवाँल्लिखति । अन्तस्थाद्विप्र[1] भेदा रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च । तत्र सानुनासिक एव नकारस्य लकारो भवति ॥ ८ ॥

## न षि ॥ ९ ॥

षकारे परे तवर्गस्य टुत्वं न भवति । भवान् षष्ठः भवांषष्ठः ॥ ९ ॥

## टोरन्त्यात् ॥१०॥

पदान्ते वर्तमानाट्टवर्गात्परस्य स्तोः ष्टुर्न भवति । षट् नरः षड् नर षण्नरः । षट् सीदन्ति षड् सीदन्ति ॥ १० ॥

## नः सक् छते ॥११॥

नान्तस्य पदस्य [2]छते परे समागमो भवति ।

१—द्विविधाः । २—छतप्रत्याहारे ।

( टित्किताबाद्यन्तयोर्वक्तव्यौ ❀ ) । टित्त्वा-दादौ कित्त्वादन्ते । राजन् चित्र राजांश्चित्रम् भवान् तनोति भवांस्तनोति ॥ ११ ॥

## शे चग् वा ॥ १२ ॥

नान्तस्य पदस्य शे परे वा चगागमो भवति । भवान् शूरः भवाञ्शूरः भवाञ्च्शूरः भवाञ्छूरः भवाञ्छूरः ॥

## ङ्णनो ह्रस्वाद् द्विः स्वरे ॥ १३ ॥

ङकारणकारनकारा ह्रस्वादुत्तरा द्विर्भवंति स्वरे परे पदान्ते च । प्रत्यङ् इदं प्रत्यङ्ङिदम् । सुगण् इह सुगण्णिह । राजन् इह राजन्निह ॥ १३ ॥

## छः ॥ १४ ॥

ह्रस्वादुत्तरश्छकारो द्विर्भवति ॥ १४ ॥

## खसे चपा झसानाम् ॥ १५ ॥

झसानां खसे परे चपा भवन्ति । तव छत्रं तवच्छत्रम् ॥ ( क्वचिद्दीर्घादपि वक्तव्यः ❀ ) ही छः हीच्छः म्ले छः म्लेच्छः ॥ १५ ॥

## मोऽनुस्वारः ॥ १६ ॥

मकारस्यानुस्वारो भवति पदांते च । तम् हसति तं हसति । पटुम् वृथा पटंवृथा ॥१६॥

## नश्चापदांते झसे ॥ १७ ॥

नकारस्य मकारस्य चापदांते च वर्तमानस्यानुस्वारो भवति झसे परे । यशान् सि यशांसि पयान् सि पयांसि । पुम् भ्यां पुंभ्याम् ॥ १७ ॥

## यमा यपेऽस्य वा ॥ १८ ॥

अनुस्वारस्य यमा वा भवन्ति यपे परे । अस्य यपस्य सवर्णः । तं करोति तङ्करोति । तं तनोति तन्तनोति ॥ १८ ॥

## यवलपरे यवला वा ॥ १९ ॥

अनुस्वारस्य यवलपरे यवला वा भवन्ति । संयन्ता सँय्यन्ता । सं वत्सरः सँव्वत्सरः । यं लोकम् यँल्लोकम् ॥ १९ ॥

## ँ छंदसि ॥ २० ॥

छन्दस्यनुस्वारो ँ कारमापद्यते शषसहरेफेषु परतः । हे सः ह ँसः । संहिता स ँहिता ॥२०॥

इति व्यञ्जनसन्धिः ।

१ पद्भद । २ ङ । [illegible]

[illegible] । १० त्वा । ११—कार्—। १२ अ ।

अथ विसर्गसन्धिर्निगद्यते ।

## विसर्जनीयस्य सः ॥ १ ॥

विसर्जनीयस्य सकारो भवति खसे परे । कः तनोति कस्तनोति ॥ १ ॥

## शषसे वा ॥ २ ॥

विसर्जनीयस्य शषसे परे वा सकारो भवति । कः शेते कश्शेते । कः षण्ढः । कष्षण्ढः । कः साधुः कस्साधुः ॥ २ ॥

## कुप्वोः ᳵक ᳵपौ वा ॥ ३ ॥

विसर्जनीयस्य कवर्ग पवर्गसम्बन्धिनि खसे परे ᳵकᳵपौ वा भवतः । कपावुच्चारणार्थौ । कः करोति कᳵ करोति । कः पचति कᳵ पचति । कः पठति कᳵपठति । वाचस्पत्यादयः संज्ञाशब्दा निपातात्साधवः । यल्लक्षणेनानुपन्नं तत्सर्वं निपातात्सिद्धम् ॥ [तद्बृहतोः करपत्योश्चौरदेवतयोः सुट्तलोपश्च ❀] तत् करः तस्करः । बृहत् पतिः बृहस्पतिः । वाचः पतिः वाचस्पतिः ॥ ३ ॥

## अह्नोऽरात्रिषु ॥ ४ ॥

अह्नो विसर्जनीयस्य पदान्ते रो भवति रात्र्यादिगणवर्जितेषु परतः । अहःपतिः अहर्पतिः । अहः गणः । अहर्गणः । अरात्रिष्विति विशेषणात् अहः रात्रं अहोरात्रम् । अहःरूपम् अहोरूपम् । अहः रथन्तरम् अहोरथन्तरम् ॥ ४ ॥

## अतोऽत्युः ॥ ५ ॥

अकारात्परस्य विसर्जनीयस्य उकारो भवति अतिपरतः । कः अर्थः कोऽर्थः ॥ ५ ॥

## हवे ॥ ६ ॥

अकारात्परस्य विसर्जनीयस्य उकारो भवति हवे परे । कः गतः कोगतः । देवः याति देवो याति । मनः रथः मनोरथः ॥ ६ ॥

## आदवे लोपश्च ॥ ७ ॥

[१]अवर्णात्परस्य विसर्जनीयस्य लोपश्च भवति अवे परे । देवाः अत्र देवा अत्र । वाताः वान्ति वाता वान्ति ॥ ७ ॥

---

१ अवर्णत्वेन अकार आकारश्च गृह्यते । तत्र पूर्वसूत्रेण अकारस्य व्यवस्थितत्वात् आकार एवात्र शिष्यते । तेन आकारात्परस्य विसर्जनीयस्य लोपश्च भवत्यवे परे इत्येव सिद्धम् ।

१ बहुह । २ ह । ...
... । १० त्वा । ११—कार्—। ...

## स्वरे यत्वं वा ॥८॥

अवर्णात्परस्य विसर्जनीयस्य स्वरे परे यत्वं वा भवति । देवाः अत्र देवायत्र ॥ ८ ॥

## भोसः ॥ ९ ॥

भोस् भगोस् अघोस् इत्येतस्मात्परस्य विसर्जनीयस्य लोपश्च भवत्यवे परे । भोः एहि भोएहि भगोःनमस्ते भगो नमस्ते । अघोःयाहि अघोयाहि

## नामिनो रः ॥१०॥

नामिनः परस्य विसर्जनीयस्य रेफो भवति अवे परे । अग्निः अत्र अग्निरत्र । पटुः यजते पटुर्यजते ॥ १० ॥

## उषसो रो बुधे ॥ ११ ॥

उषसो विसर्जनीयस्य रेफो भवति बुधे परे उषः बुधः उषर्बुधः ॥ ११ ॥

## रेफप्रकृतिकस्य खपे वा ॥ १२ ॥

रेफप्रकृतिकस्य विसर्जनीयस्य खपे परे वा रेफो भवति । गीः पतिः गीष्पतिः गीर्पतिः । धूः पतिः धू ᳶ पतिः धूर्पतिः ॥ १२ ॥

## रः ॥ १३ ॥

रेफसम्बन्धिनो विसर्जनीयस्य रेफो भवत्येव परे। प्रातःअत्र प्रातरत्र। अन्तःगतः अन्तर्गतः॥१३॥

## रि लोपो दीर्घश्च ॥ १४ ॥

रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः। पुनः रमते पुना रमते। शुक्तिःरूप्यात्मना भाति शुक्ति रूप्यात्मना भाति ॥ १४ ॥

## सैषोर्हसे ॥१५॥

सशब्दादेषशब्दाच्च परस्य विसर्जनीयस्य लोपश्च भवति हसे परे। सः चरति सचरति। एष हसति एष हसति। सैषादिति संहिता। सैष[1] दाशरथी रामः सैष राजा युधिष्ठिरः। सैष कर्णो महात्यागी सैष भीमो महाबलः॥१॥ इत्यादौ पादपूरणे सन्ध्यर्थाः ज्ञेयाः। यदुक्तं लौकिका येह तद्भेदे बहुलं भवेत्। सेमां भूम्याददे सैषामित्यादीनामदुष्टता॥२॥१५॥

## क्वचिन्नामिनो लोपश्च ॥ १६ ॥

नामिनः परस्य विसर्जनीयस्य क्वचिल्लोपश्

१ स एव इत्यत्र सैषेत्यक्षरान्तरपादार्था संहिता।

१ षड्ढ । २ ड । ...

... १० त्वा । ११–कार्– ...

भवत्यबे परे । भूमिः आददे भूम्याददे । क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा[1] क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुल[2]कं वदन्ति ॥ ३॥ वर्णागमो वर्णविपर्य[3] यश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥ ४॥ वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः । षोडशादौ विकारः स्याद्वर्णनाशः पृषोदरे ॥ ५॥ वर्णनाशविकाराभ्यां धातोरतिशायेन यः । योगः स उच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥ ६ ॥

इति विसर्गसन्धिः ।

## ॥ अथ षड्लिंगाः ॥

( तत्र स्वरान्तः पुल्लिंगाः )

अथविभक्तिर्विभाव्यते । साद्विविधास्यादिस्त्यादिश्च

**विभक्त्यन्तं पदम् ॥ १॥**

तत्र स्यादिर्विभक्तिनाम्नो योज्यते ॥ १ ॥

**अविभक्ति नाम ॥ २ ॥**

विभक्तिरहितं धातुवर्जितं चार्थवच्छब्दरूपं ना

---

१ अनिश्चितं विभजतया क्वचिद्भवति क्वचिन्न भवति । विकल्पः । २वैदिकप्रयोगम् । ३वर्णविपर्ययो नाम अन्यस्यसिद्धिर न्यस्योच्चारणम् । यथा हिंसिधातो हिंसशब्दे प्राप्ते तत्रसिंहइति ।

मोऽच्यते । कृत्तद्धितसमासाश्च प्रतिपादिकसंज्ञा इति केचित् ॥ २ ॥

## तस्मात् सि औ जस्, अम् औ शस्, टा भ्याम् भिस् ङे भ्याम् भ्यस् ङसि भ्याम् भ्यस्, ङस् ओस आम्. ङि ओस सुप् ॥ ३ ॥

तस्मान्नाम्नः पराः स्यादयः सप्त विभक्तयो भवन्ति । तत्राप्यर्थमात्रैकत्वविवक्षायां प्रथमैकवचने देव सि इति स्थिते इकार उच्चारणार्थः ॥ ३ ॥

## स्रोर्विसर्गः ॥४॥

सकाररेफयोर्विसर्जनीयादेशो भवत्यधातोः रसे पदान्ते च । देवः । द्वित्वविवक्षायामौ 'औ औ औ देवौ । बहुत्वविवक्षायां प्रथमाबहुवचने जस् । जकारस्येत्संज्ञायां तस्य लोपः, प्रयोजनं च 'जसि' इति विशेषणार्थम् । देवअस इति स्थिते दीर्घविसर्गौ देवाः ॥ [ अकाराज्जसोऽसुक्कचिदुक्तव्यः ] ❀ देवासः ब्राह्मणासः द्वितीयैकवचने । देव अम् इति स्थिते ॥ ४ ॥

## अम्शसोरस्य ॥५॥

समानादुत्तरयोः अम्शसोरकारस्यलोपो भवत्य धातोः देवम् । देवौ । बहुवचने देव शस् इति स्थिते शकारः 'शसि' इति विशेषणार्थः ॥५॥

## सो नः पुंसः ॥६॥

पुल्लिंगात्समानादुत्तरस्य शसः सकारस्य नकारादेशो भवति ॥ ६ ॥

## शसि ॥ ७ ॥

शसि परे पूर्वस्य स्वरस्य दीर्घो भवति यदादेशस्तद्धद्भवति न तु वर्णमात्रविधौ । देवान् । तृतीयैकवचने देव टा इति स्थिते । टकारोऽनुबन्धः टेनः इति विशेषणार्थः ॥ ७ ॥

## टेन ॥ ८ ॥

अकारात्परष्टा इन भवति । देवेन ॥ ८ ॥

## अद्भि[1] ॥ ९ ॥

अकारस्य आकारादेशोभवति भकारे परे। देवाभ्याम्

---

१ आत् इति सूत्रादाकारस्यानुवृत्तिः ।

## ऽभ्यः ॥ १० ॥

अकारात्परस्य भिसो भकारस्याकारादेशो भवति । 'अ इ ए' देव एस् इति स्थिते 'ए ऐ ऐ' द्विविसर्जनीयौ । देवैः ॥ ( अकारस्य भिसि छंदस्येकारो वा वक्तव्यः❀) देवेभिः । कर्णेभिः । चतुर्थ्यैकवचने देव ङे इति स्थिते ङकारो ङित्कार्यार्थः सर्वत्र ॥ १० ॥

## ङेरक् ॥ ११ ॥

अकारात्परस्य ङे इत्येतस्यागागमो भवति । कित्वादन्ते । 'ए अय् । दीर्घः । देवाय । देवाभ्याम् पूर्ववत् । चतुर्थीबहुवचने देव भ्यस् इति स्थिते ॥ ११ ॥

## एस्भि बहुत्वे ॥ १२ ॥

अकारस्य एत्वं भवति सकारे भकारे च परे बहुत्वे सति । देवेभ्यः । पञ्चम्येकवचने देव ङसि इति स्थिते ॥ १२ ॥

## ङसिरत् ॥ १३ ॥

अकारात्परो ङसिरद्भवति दीर्घः । देवात् । देवा

भ्याम् । देवेभ्यः । षष्ठ्येकवचने देव ङस् इति स्थिते ॥ १३ ॥

## ङस्स्य ॥ १४ ॥

अकारात्परो ङसः स्यो भवति । देवस्य । षष्ठीद्विवचने देव ओस् इति स्थिते ॥ १४ ॥

## ओसि ॥ १५ ॥

अकारस्य ओसि परे एत्वं भवति 'ए अय्' देवयोः ॥ १५ ॥

## नुडामः ॥ १६ ॥

समानात्परस्यामो नुडागमो भवति टित्वादादौ उकार उच्चारणार्थः ॥ १६ ॥

## नामि ॥ १७ ॥

नामि परे पूर्वस्य दीर्घो भवति । देवानाम् । सप्तम्येकवचने देव ङि इति स्थिते । 'अ इ ए' देव 'ओसि' देवयोः पूर्ववत् । सप्तमीबहुवचने देव सुप् इति स्थिते पकारस्येत्संज्ञायां लोपः । 'एस् भिर्बहुत्वे' इत्येकारः ॥ १७ ॥

## किलात् षः सः कृतस्य ॥ १८ ॥

कवर्गादिलाच्चप्रत्याहारादुत्तरस्य केनाचित्सूत्रेण कृतस्य सकारस्य षकारो भवति । देवेषु ।१८।

## आमन्त्रणे सिद्धिः ॥ १९ ॥

आमन्त्रणमभिमुखीकरणं तस्मिन्नर्थे विहितः सिद्धिसंज्ञो भवति ॥ १९ ॥

## समानाद्धेर्लोपोऽधातोः ॥ २० ॥

समानादुत्तरस्य धेर्लोपो भवत्यधातोः । (आभिमुख्याभिव्यक्तये हे शब्दस्य प्राक्प्रयोगः) हे देव । हे देवौ । हे देवाः । एवं घटपटस्तम्भादयोऽप्यकारान्ताः । सर्व । विश्व । उभ । उभय । अन्य । अन्यतर । इतर । डतर । डतम । कतर । कतम । सम । सिम । नेम । एक । पूर्व । अवर । दक्षिण । उत्तर । अपर । अधर । स्व । अन्तर । त्यद् । तद् । यद् । एतद् । इदम् । अदस् । द्वि । किम् । युष्मद् । अस्मद् । भवतु । एते सर्वादयस्त्रिलिंगाः । तत्र पुल्लिंगत्वेन रूपं ज्ञेयम् । सर्वः सर्वौ । बहुवचने सर्व जस् इति स्थिते ॥ २० ॥

१ षड्ढ । २ ङ । ३-आ ।
। ... ९ त्त । १० त्वा । ११—कार्-। १२ अ ।

## जसी ॥ २१ ॥

सर्वादेरकारान्तात्परो जस् ई भवति । 'अइए' सर्वे । सर्वम् सर्वौ सर्वान् । तृतीयैकवचने सर्व इन इति स्थिते ॥ २१ ॥

## षरनोंणोऽनन्ते ॥ २२ ॥

षकाररेफऋवर्णेभ्यःपरस्य नकारस्य णकारादेशो भवति । अन्ते स्थितस्यनभवति ।सर्वानित्यादौ२२

## अवकुप्वन्तरेऽपि ॥२३॥

अव प्रत्याहारेण कवर्गेण पवर्गेण च मध्ये व्यवधानेऽपि नस्य णो भवति नान्येन । सर्वेण । सर्वाभ्याम् । 'अद्भि'इत्यात्वम् । सर्वैः । चतुर्थ्येकवचने सर्व ए इति स्थिते ॥ २३ ॥

## सर्वादेः[1]स्मट् ॥ २४ ॥

सर्वादेरकारान्तात्परस्य चतुर्थ्येकवचनस्य स्मडागमो भवति । 'ए ऐ ऐ' सर्वस्मै । सर्वाभ्याम् । सर्वेभ्यः । पञ्चम्येकवचने सर्व अत् इति स्थिते ।२४।

---

१ टकारः स्थाननियमार्थः ।

**अतः सर्वादेः ॥ २५ ॥**

सर्वादेरकारान्तात्परस्यातः स्मडागमो भवति सर्वस्मात् । सर्वाभ्याम् । सर्वेभ्यः । षष्ठ्येकवचने सर्व ङस् इति स्थिते 'ङसस्य' सर्वस्य । सर्व ओस् इति स्थिते 'ओसि' 'ए' 'अय' सर्वयोः । षष्ठीबहुवचने सर्व आम् इति स्थिते ॥ २५ ॥

**सुडामः ॥ २६ ॥**

सर्वादेः परस्यामः सुडागमो भवति [1]सर्वेषाम् । सप्तम्येकवचने सर्व ङि इति स्थिते ॥ २६ ॥

**ङिः स्मिन् ॥ २७ ॥**

सर्वादेरकारान्तात्परो ङिः स्मिन् भवति । सर्वस्मिन् सर्वयोः सर्वेषु । हे सर्व हे [2]सर्वौ हे सर्वे । एवं विश्वादीनामेकशब्दपर्यन्तानां रूपं ज्ञेयम् । डतरडतमौ विहाय । तौ प्रत्ययौ । ततस्तादन्ताः शब्दा ग्राह्याः पूर्वः पूर्वौ । पूर्व जस् इति स्थिते [पूर्वादीनां तु नवानां जसि ईकारो वा वक्तव्यः ❀] पूर्वे, पूर्वाः ।

---

१ पश्चिम बहुत्वे इत्यकारस्येत्वम् । क्विलात्व संस्कृतस्यइतिषत्वम् ।
२ आभिमुख्याभिव्यक्तये संबुद्धौ सर्वत्रहे शब्दस्य प्राक्प्रयोगः ।

१ षड्ढ । २ ड । ...
... १० त्वा । ११—कार्—। १२ अ ।

परे, पराः इत्यादि ॥ ( ङसिङ्योः स्मात्स्मिनौ वा वक्तव्यौ ❋ ) पूर्वस्मात्, पूर्वात्, पूर्वस्मिन्, पूर्वे इत्यादि ( प्रथमचरमतयाऽल्पार्धकतिपयनेमानां जसीकारो वा वक्तव्यः ❋ ) प्रथमे, प्रथमाः चरमे चरमाः शेषं देववत् । तयायडौ प्रत्ययौ ॥ ( तीयस्य सर्वशब्दवद्रूपं ङित्सु वा वक्तव्यम् ❋ ) । द्वितीयस्मै । द्वितीयाय । द्वितीस्मात् । द्वितीयात् । द्वितीयस्मिन् । द्वितीये । एवं तृतीयः । उभशब्दो नित्यं द्विवचनान्तः । उभौ । उभौ । उभाभ्याम् । उभाभ्याम् । उभाभ्याम् । उभयोः । उभयो । हे उभौ । उभयशब्दस्य द्विवचनाभावादेकबचनबहुबचने भवतः । उभयः उभये । उभयम् । उभयान् । उभयेन् । उभयैः । उभयस्मै । उभयेभ्यः । इत्यादि अकारान्तः पुल्लिंगो मासशब्दः ॥ २७ ॥

## मासस्याल्लोपो वा ॥२८॥

मासशब्दस्याकारस्य लोपो वा भवति सर्वासु विभक्तिषु परतः ॥ २८ ॥

## हसेपः सेर्लोपः ॥ २९ ॥

हसान्तादीवन्ताच्च परस्य सेर्लोपो भवति । माः मासः मासौ मासौ मासः मासाः । मासम् मासौ मासौ मासः मासान् । मासामासेनमाभ्याम् मासाभ्याम्माभिःमासैः । मासेमासायमाभ्याम्मासाभ्याम् माभ्यः मासेभ्यः । मासःमासात्माभ्याम् मासाभ्याम् माभ्यः मासेभ्यः । मासः मासस्य मासोः मासयोः मासाम् मासानाम् । मासि मासे मासाः मासयोः मास्सु मासेषु । हे माः हे मास हे मासौ हे मासौ हे मासः हे मासाः । आकारान्तः पुल्लिंगः सोमपा शब्दः । सोमपाः सोमपौ सोमपाः । अधातोरिति विशेषणाद्धल्लोपो नास्ति । हे सोमपाः हे सोमपौ हे सोमपाः । सोमपाम् सोमपौ । बहुवचने सोमपा अस् इति स्थिते ॥ २९ ॥

## आतो धातोर्लोपः ॥ ३० ॥

धातुसंबन्धिन आकारस्य लोपो भवति शसादौ स्वरे परे । सोमपः । सोमपा । सोमपाभ्याम् सोमपाभिः सोमपे सोमपाभ्याम् सोमपाभ्यः । सोमपः सोमपाभ्याम् सोमपाभ्यः । सोमपः सोम-

१ षड्ढ । २ ड । ३ ओ ।

... ै । ९ न । १० त्वा । ११-कार्-। १२ अ ।

पोः सोमपाम् । सोमपि सोमपोः सोमपासु । एवं कीलालपाशंखध्माप्रभृतयः ॥ ३० ॥ इकारान्तः पुल्लिंगो हरिशब्दः प्रथमैकवचने । हरिः । द्विवचने हरि औ इति स्थिते ॥

## औ यू ॥ ३१ ॥

इकारान्तादुकारान्ताच्च पर औ युत्वं मापद्यते । ई ऊ भवतः । हरी ॥ ३१ ॥

## ए ओ जसि ॥ ३२ ॥

इकारान्तस्य उकारान्तस्य च जसि परे एकार ओकारश्च भवति । 'ए अय्' हरयः ॥ ३२ ॥

## धौ ॥ ३३ ॥

इकारान्तस्य उकारान्तस्य धिविषये एकार ओकारश्च भवति । हे हरे । 'समानाद्धेर्लोपोऽधातोः' हे हरी हे हरयः । हरीन् ॥ ३३ ॥

## टा नाऽस्त्रियाम् ॥ ३४ ॥

इकारान्तादुकारान्ताच्च परष्टा ना भवत्यस्त्रि

याम् । हरिणा हरिभ्याम् हरिभिः । हरि ङे इति स्थिते ॥ ३४ ॥

## ङिति ॥५॥

इकारान्तस्य उकारान्तस्य च ङिति परे एकार ओकारश्च भवति । हरये हरिभ्याम् हरिभ्यः । हरि ङसिति स्थिते ॥ ३५ ॥

## ङसिङसोरस्य ॥ ३६ ॥

एदोद्भ्यां परस्य ङसिङसोरकारस्य लोपो भवति । हरेः हरिभ्याम् हरिभ्यः । हरेः हर्योः हरीणाम् । हरि ङसि इति स्थिते ॥ ३६ ॥

## ङेरौ डित् ॥ ३७ ॥

इदुद्भ्यामुत्तरस्य ङेरौ भवति स च डित् ॥३७॥

## डिति टेः ॥ ३८ ॥

डिति परे टेर्लोपो भवति । हरौ हर्योः हरिषु । एव मणिगिरिरविकवि प्रभृतयः पुल्लिंगाः एतैरेव सूत्रैः सिद्ध्यन्ति । उकारान्ताश्च विष्णुवायुभानु प्रभृतयः एतैरेव सूत्रैः सिद्ध्यन्ति । भानुः भानू भानवः । भा-

१ पद्ध । २ ङ । ३ ओ ।
। ... । ९ तन । १० त्वा । ११—कार्—। १२ अ ।

नुम् भानू भानुन्। भानुना भानुभ्याम् भानुभिः। भानवे भानुभ्याम् भानुभ्यः। भानोः भानुभ्याम् भानुभ्यः। भानोः भान्वोः भानूनाम्। भानौ भान्वोः भानुषु। हे भानो इत्यादि ॥३८॥ सखिशब्दस्य भेदः। सखिसि इति स्थिते ॥

## सेर्डाऽधेः ॥ ३९ ॥

सखिशब्दात्परस्य सेरधेर्डा भवति स च डित्। डित्वाट्टिलोपः। सखा। अधेरिति विशेषणादेकारो धिविषये। हे सखे ॥ ३९ ॥

## ऐ सख्युः ॥ ४० ॥

सखिशब्दस्यैकारो भवति पञ्चसु परेषु। षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य ज्ञेयः आयादेशः सखायौ ॥ ४० ॥

## द्विवचनस्य वा छन्दसि ॥ ४१ ॥

द्विवचनस्य औ आ भवति वेदे। सखायौ सखाया। सखायः। सखायम् सखायौ सखीन्। सखि टा इति स्थिते ॥ ४१ ॥

## सखिपत्योरीक् ॥ ४२ ॥

सखिपतिशब्दयोरीगागमो भवति टाङेङिषु परतः दीर्घत्वान्न ना । सख्या । 'आगमजमनित्यम्' इति न्यायात् । सखिना । पतिना । सखिभ्याम् सखिभिः । सख्ये सखिभ्याम् सखिभ्यः । सखि ङसि इति स्थिते ॥ ४२ ॥

## ऋङ्ङे ॥ ४३ ॥

सखिपतिशब्दयोर्ऋगागमो भवति ङसिङसो ङकारे परे सख्यृ अस् इति स्थिते ॥ ४३ ॥

## ऋतो ङ्क उः ॥ ४४ ॥

ऋकारान्तात्परस्य ङसिङसोरकारस्य उकारो भवति, स च डित् । 'डिति टेः' सख्युः सखिभ्याम् सखिभ्यः सख्युः सख्यो सखीनाम् । सप्तम्येकवचने कृते । 'ङेरौ डित्' इत्यौकारेकृते 'सखिपत्योरीक्' इति रीगागमो भवति । सख्यौ सख्योः सखिषु । पतिशब्दस्य प्रथमाद्वितीययोर्हरिशब्दवत्प्रक्रिया । तृतीयादौ तु सखिशब्दवत् । पतिः पती पतयः इत्यादि॥ (पतिरसमास एव सखि

१ षड्ढ । २ ङ । २ आ [illegible]

[illegible] । [illegible] नै । ९ मन । १० त्वा । ११-कार्-। १२ म्र ।

शब्दवद्वक्तव्यः ) ततः समासान्तस्य नादयो भव-न्ति । प्रजापतिना प्रजापतये इत्यादि ॥ ४४ ॥ द्विशब्दो नित्यं द्विवचनान्तः द्वि औ इति स्थिते ।

## त्यदादेष्टेरः स्यादौ ॥४५॥

त्यदादेष्टेरकारो भवति स्यादौ परे । द्वौ द्वौ द्वा-भ्याम् द्वाभ्यां द्वाभ्याम् द्वयोः द्वयोः । त्यदादीनां धेरभावः । त्रिशब्दो नित्यं बहुवचनान्तः त्रि जस् इति स्थिते । 'ए ओ जसि' इत्येकारे कृते अया देशः । त्रयः त्रीन्[१] त्रिभिः त्रिभ्यः त्रिभ्यः ॥४५॥

## त्रेस्त्रयङ् ॥४६॥

त्रिशब्दस्यायङादेशो भवति नामि परे ॥ (ङिद्-न्तस्य वक्तव्यः❀) त्रयाणाम् । त्रिषु । कतिशब्दो नित्यं बहुवचनान्तः । कति जस् इति स्थिते ।[कति-शब्दाज्जश्शसोर्लुग्वक्तव्यः❀ ]इति जश्शसो लुक् लुकि न तन्निमित्तम् । कति कति कतिभिः कति-भ्यः कतिभ्यः कतिनाम् कतिषुत्रिषु लिङ्गेषु चायं सरूपः ॥ ४६ ॥ ईकारान्तः पुल्लिङ्गः सुश्रीशब्दः । सुश्रीः । सुश्री औ इति स्थिते ।

---

१ लो नः पुंसि ।

## य्वोर्धातोरियुवौ स्वरे ॥४७॥

धातोरिकारोकारयोरियुवौ भवतः स्वरे परे । सुश्रियौ सुश्रियः । हे सुश्रीः हे सुश्रियौ हे सुश्रियः सुश्रियम् सुश्रियौ सुश्रियः सुश्रिया सुश्रीभ्याम् सुश्रीभिः । सुश्रिये सुश्रीभ्याम् सुश्रीभ्यः । सुश्रियः सुश्रीयोः सुश्रियाम् । सुश्रियि सुश्रियोः सुश्रीषु तथैव सुधीशब्दः । [1]सुधीः सुधियौ इत्यादि । ऊकारान्तः पुल्लिंगः [2]स्वयंभू शब्दः । स्वयंभूः स्वयंभुवौ स्वयंभुवः । हे स्वयंभूः । स्वयंभुवम् स्वयंभुवौ स्वयंभुवः स्वयंभुवा स्वयंभूभ्याम् स्वयंभूभिः । स्वयंभुवे । स्वयंभूभ्याम् स्वयंभूभ्यः स्वयंभुवः स्वयंभूभ्याम् स्वयंभूभ्यः । स्वयंभुवः स्वयंभुवो स्वयंभुवाम् । स्वयंभुवि स्वयंभुवोः स्वयंभूषु ॥४७॥ [3]सेनानीशब्दस्याविशेषो हसादौ । सेनानीः । स्वरादौ तु विशेषः । सेनानी औ इति स्थिते ।

## य्वो वा ॥ ४८ ॥

धातोरवयवसंयोगः पूर्वो यस्मादिकारादूकारा

---

१—सुष्ठु ध्यायतीति सुधीः । २—स्वयं भवतीति स्वयंभूः । ३—सेनां नयतीति सेनानी नराधिपः ।

१ षड्ढ । २ ड । [illegible]

[illegible] १० त्वा । ११—कार्—। १२ श्र ।

न्तात्मास्ति तदन्तस्यानेकस्वरस्य कारकाव्यय पूर्वस्यैकस्वरस्य च धातोरीकारस्य ऊकारस्य च यकारवकारौ भवतः स्वरे परे । वर्षाभूपुनर्भू-व्यतिरिक्तभूशब्दसुधीशब्दौ वर्जयित्वा वाग्रहणा-दियं विवक्षा । सेनान्यौ सेनान्यः । हे सेनानीः हे सेनान्यौ हे सेनान्यः । सेनान्यम् सेनान्यौ सेनान्यः । सेनान्या सेनानीभ्याम् सेनानीभिः । सेनान्ये सेनानीभ्याम् सेनानीभ्यः । सेनान्यः सेनान्योः । ( सेनान्यादीनां वामो नुड् वक्तव्यः ) सेनान्याम् सेनानीनाम् ॥ ४८ ॥

## आम् ङे नियश्च ॥ ४९ ॥

आबन्तादीबन्तान्नीशब्दाच्चोत्तरस्य ङेरामा-देशो भवति । सेनान्याम् सेनान्योः सेनानीषु । वातप्रमीशब्दस्य भेदः । वातप्रमीः वातप्रम्यौ वातप्रम्यः । हे वातप्रमीः हे वातप्रम्यौ हे वात-प्रम्यः वातप्रमीम् वातप्रम्यौ वातप्रमीन् । वात-प्रम्या वातप्रमीभ्याम् वातप्रमीभिः । वात-प्रम्ये वातप्रमीभ्याम् वातप्रमीभ्यः । वातप्रम्यः

वातप्रमीभ्याम् वातप्रमीभ्यः । वातप्रम्यः वात-प्रम्योः । आमि नुट् । वातप्रमानाम् । औ तु सवर्णं-दीर्घः । वातप्रमी वातप्रम्योः वातप्रमीषु । एवं ग्राम-णीप्रभृतयः सेनानीवत् । ऊकारान्तश्चयवलूप्रभृतयः ॥४६॥ ऋकारांतः पुल्लिंगः पितृशब्दः ॥

## सेरा ॥ ५० ॥

ऋकारान्तात्परस्य सेरा भवति स च डित् । डित्वाट्टिलोपः । पिता ॥ ५० ॥

## अर् पञ्चसु ॥ ५१ ॥

ऋकारोऽर्भवति पञ्चसु परेषु स च डित् । पितरौ पितरः ॥ ५१ ॥

## घेरर् ॥ ५२ ॥

ऋकारान्तात्परस्य घेरर् भवति स च डित् । हे पितः हे पितरौ हे पितरः । पितरम् पितरौ पितॄन् । पित्रा पितृभ्याम् पितृभिः । पित्रे पितृभ्याम् पितृभ्यः । पितुः पितृभ्यां पितृभ्यः । पितुः पित्रोः पितॄणाम् ।

१ षड्ड । २ ...

... ९ ... । १० त्वा । ११—क्वार्— । १२ ...

## ङौ ॥ ५३ ॥

ऋकारस्यार्भवति ङौ परे। पितरि पित्रोः पितृषु। एवं जामातृभ्रात्रादयः एवं नृशब्दः। ना नरौ नरः नरम् नरौ नॄन्। न्रा नृभ्याम् नृभिः। न्रे नृभ्याम् नृभ्यः। नुः नृभ्याम् नृभ्यः। नुः न्रोः॥५३॥

## नुर्वा नामि दीर्घः ॥ ५४ ॥

नृशब्दस्य नामि परे वा दीर्घो भवति। नॄणाम् नृणाम्। नरि न्रो नृषु। हे नः हे नरौ हे नरः ॥५४॥ कर्तृशब्दस्य पञ्चसु विशेषः।

## स्तुरार् ॥ ५५ ॥

सकारतृप्रत्ययसंबन्धिन ऋकारस्यार्भवति पञ्चसु परेषु। कर्तृसिं इति स्थिते यदादेशस्तद्वद्भवति 'सेरा' डित्वाट्टेर्लोपः। कर्ता कर्तारौ कर्तारः। हे कर्तः हे कर्तारौ हे कर्त्तारः। कर्त्तारम् कर्तारौ कर्तॄन्। कर्त्रा कर्तृभ्याम् कर्तृभिः। कर्त्रे कर्तृभ्याम् कर्तृभ्यः। कर्तः कर्तृभ्याम् कर्तृभ्यः। कर्तुः कर्त्रोः कर्तॄणाम्। कर्त-

रि कर्त्रोः कर्तृषु। एवं नप्तृहोतृपोतृप्रशास्तृप्रभृतयः उकारान्तस्य क्रोष्टुशब्दस्यभेदः ॥ ( उकारान्तस्यापि क्रोष्टुशब्दस्य पञ्चस्वधिषु तृप्रत्ययान्तस्येव रूपं वक्तव्यम्) क्रोष्टा क्रोष्टारो क्रोष्टारः क्रोष्टारम् । क्रोष्टारौ शसिपरे [१]तृप्रत्ययवद्भावाभावात् । क्रोष्टून् । [२]तृतीयादौ तृप्रत्ययान्तता वा वक्तव्या स्वरादौ ❀ ) क्रोष्ट्रा क्रोष्टुना क्रोष्टुभ्याम् क्रोष्टुभिः । क्रोष्ट्रे क्रोष्टवे क्रोष्टुभ्याम् क्रोष्टुभ्यः । क्रोष्टु क्रोष्टोः क्रोष्टुभ्याम् क्रोष्टुभ्यः । क्रोष्टुः क्रोष्टोः क्रोष्ट्रोः क्रोष्ट्वो क्रोष्टूनाम् । कृता[३]कृतप्रसंगो यो विधिः स नित्यः नित्यानित्ययोर्मध्ये नित्यविधिर्बलवान् इति प्रथमे नुडागमे कृते हसादित्वान्तृज्वद्भावो नास्ति ॥ क्रोष्टरि क्रोष्टौ क्रोष्ट्रोः क्रोष्ट्वोः क्रोष्टुषु । ऋकारान्ता ऌकारान्ता एकारान्ताप्रसिद्धाः । ऐकारान्तः पुल्लिंगः सुरैशब्दः ५५

१–तृप्रत्ययेन तुल्यं तृप्रत्ययवत् भावस्य अवोभावाभाः।
२–तृतीया आदिर्यस्य सः तस्मिन्।
३–यः प्रसंगः कृतेऽपि भवति अकृतेऽपि भवति।

१ षड्‌ढ । २ ड । ... । ९ तन । १० त्वा । ११–कार्–। १२ अ ।

## रैस्मि ॥ ५६ ॥

रैशब्दस्याकारादेशो भवति सकारमकारादौ विभक्तौ परतः। सुराः। स्वरादौ सर्वत्रायादेशः। सुरायौ सुरायः। हे सुराः। हे सुरायौ हे सुरायः। सुरायम् सुरायौ सुरायः। सुराया सुराभ्याम् सुराभिरित्यादि ॥ ५६ ॥ ओकारान्तः पुल्लिंगो गोशब्दः गो सि इति स्थिते ॥

## ओरौ ॥ ५८ ॥

ओकारस्यौकारादेशो भवति पञ्चसु। गौः गावौ गावः। हे गौः हे गावौ हे गावः ॥५७॥

## आऽम् शसि ॥ ५८ ॥

ओकारस्यात्वं भवति अमि शसि च परे। गाम् गावौ गाः। गवा गोभ्याम् गोभिः। गवे गोभ्याम् गोभ्यः। 'ङस्ये' त्यकारलोपः। गोः गोभ्याम् गोभ्यः। गोः गवोः गवाम् ॥ ५८ ॥

## श्रुतौ गोरामः ॥ ५९ ॥

श्रुतौगोशब्दात्परस्यामो नुडागमो भवति। गोना-म्। गवि गवोः गोषु। एवं सुद्योशब्दः। आकारन्तः पुल्लिगो [1]ग्लौशब्दस्तस्य हसादावविशेषः स्वरादावावादेशः। ग्लौः ग्लावौ ग्लावः। ग्लावंग्लावौ ग्लावः। ग्लावा ग्लौभ्यामित्यादि ॥ ५९ ॥

॥ इति स्वरान्ताः पुल्लिंगाः ॥

## अथ स्वरान्ताः स्त्रीलिंगाः।

तत्राबन्तो गंगाशब्दः तस्य नामसंज्ञायां प्रथमैकवचने सिः।

## आबतः स्त्रियाम् ॥ १ ॥

अकारान्तान्नाम्नःस्त्रियांवर्तमानादाप्प्रत्ययोभवति।

## आपः ॥ २ ॥

आबन्त्यात्परस्य सेर्लोपो भवति। गंगा॥२॥

## औरी ॥ ३ ॥

आबन्तात्पर औ ईकारमापद्यते। 'अइए' गंगेगंगाः।

---

[1] ग्लौश्चन्द्रः ग्लौर्मृगांकः कलानिधिः इत्यमरः।

१ षड्ढ । २ ...

... । १० त्वा । ११—कार्—। १२ अ ।

## घिरिः ॥ ४ ॥

आबन्तात्परो घिरिर्भवति । हे गंगे हे गंगे हे गंगाः ॥ ४ ॥

## अम्बादीनां धौ ह्रस्वः ॥ ५ ॥

अम्बादीनां धौ परे ह्रस्वो भवति । हे अम्ब हे अक्क हे अल्ल । असंयुक्तानां डलकवतां प्रतिषेधो वाच्यः ❀ ॥ हे अम्बाडे हे अम्बाले हे अम्बिके इत्यादौ ह्रस्वो न भवति । गङ्गास् गंगे पुंस इति विशेषणात् स्त्रियां शसि सकारस्य नकारो न भवति ॥ गंगाः । तृतीयैकवचने गंगाटा इति स्थिते ॥ ५ ॥

## टौसोरे ॥ ६ ॥

आबन्तस्य टौसोःपरयोरेत्वं भवति । अयादेशः । गंगया गंगाभ्याम् गंगाभिः। गंगा ए इति स्थिते। ६।

## ङितां यट् ॥ ७ ॥

आबन्तात्परेषां ङ ङसि ङस् ङि इत्येतेषां यङ्ग

गमो भवति । टकारः स्थानानियमार्थः । गंगायै गंगाभ्याम् गंगाभ्यः गंगायाः गंगाभ्याम् गंगाभ्यः । गंगायाः गंगयोः ॥ (आबन्तादीबन्तादामो नुड् वक्तव्यः ❀) गंगानाम् । 'आम् ङे' इत्याम् गंगायाम् गंगयोः गंगासु । एवं श्रद्धा मेधा शाखा माला हेला दोला प्रभृतयः । सर्वा सर्वे सर्वाः । हे सर्वे । सर्वाम् सर्वे सर्वाः । सर्वया सर्वाभ्याम सर्वाभिः । सर्वादीनां तु ङित्सु विशेषः ॥ ७ ॥

## यटोऽच्च ॥ ८ ॥

आबन्तात्सर्वादेः परस्य यटः सुडागमो भवति पूर्वस्य चापोऽकारो भवति । सर्वस्यै सर्वाभ्याम् सर्वाभ्यः । सर्वस्याः सर्वाभ्याम् सर्वाभ्यः । सर्वस्याः सर्वयोः सर्वासाम् । सर्वस्याम् सर्वयाः सर्वासु । आकारान्तो जराशब्दः ॥ ( जरायाः स्वरादौ जरस् वा वक्तव्यः ❀ ) जरा जरसौ जरे जरसः जराः । जरसम् जराम् जरसौ जरे जरसः जराः । जरसा जरया जराभ्याम् जराभिः । जरसे जरायै जराभ्याम् जराभ्यः । जरसः जरायाः । जरा-

भ्याम् जराभ्यः । जरसः जरायाः जरसोः जरयोः जरसाम् जराणाम् । जरसि जरायाम् जरसोः जरयोः जरासु । हे जरे हे जरसौ हे जरे हे जरसः हे जराः । इकरान्तः स्त्रीलिंगो बुद्धिशब्दः तस्य च प्रथमाद्वितीययोः । हरिशब्दवत्प्रक्रिया । बुद्धिः बुद्धी बुद्धयः । बुद्धिम् बुद्धी बुद्धीः । स्त्रीत्वाच्छसो नत्वाभावः । बुद्ध्या बुद्धिभ्याम् बुद्धिभिः ॥ ८ ॥

## इदुद्भ्याम् ॥ ९ ॥

स्त्रियां वर्तमानाभ्यामीकारोकाराभ्यां परेषां ङिद्वचनानां वा अडागमो भवति । बुद्ध्यै बुद्धये बुद्धिभ्यां । बुद्धिभ्यः । बुद्ध्याः बुद्धेः बुद्धिभ्याम् बुद्धिभ्यः । बुद्ध्याः बुद्धेः बुद्ध्योः बुद्धीनाम् ॥ ९ ॥

## स्त्रियां य्वोः ॥ १० ॥

इश्च उश्च य्वू तस्मादिवर्णान्तादुवर्णान्ताच्च परस्य ङे रामादेशो भवति । बुद्ध्याम् । अडागमाभावे आमोऽप्यभावः । बुद्धौ बुद्ध्योः बुद्धिषु । एवं मतिभूतिधृतिरुचिकृतिसिद्धिशान्तिक्षान्ति-

भ्रान्तपालिशक्तिप्रभृतयः । एवं धेनु तनु रज्जु प्रभृतयः स्त्रीलिंगा उकारान्ता एतैरेव सूत्रैः सिद्ध्यन्ति। धेनुः धेनू धेनवः । हे धेनो हे धेनू हे धेनवः । धेनूम् धेनू धेनूः । धेन्वा धेनुभ्याम् धेनुभिः । धेन्वै धेनवे धेनुभ्यां धेनुभ्यः । धेन्वाः धेनो धेनुभ्याम् धेनुभ्यः । धेन्वाः धेनोः धेन्वोः धेनूनाम् । धेन्वाम् धेनौ धेन्वोः धेनुषु १० ईकारान्तः स्त्रीलिंगो नदीशब्दः ।

## हसेपः सेर्लोपः ॥११॥

हसान्तादीबन्ताच्च परस्य सेर्लोपो भवति । नदी नद्यौः नद्यः ॥ ११ ॥

## धौ ह्रस्वः ॥ १२ ॥

इवर्णोवर्णयोरधातो स्त्रियां धौ परे ह्रस्वो भवति । हे नदि हे नद्यौ हे नद्यः नदीम् नद्यौ नदीः । नद्या नदीभ्याम् नदीभिः ॥१२॥

## ङितामट् ॥ १३ ॥

स्त्रियामीकारान्तादूकारान्ताच्च परेषां ङितां वचनानामडागमो भवति । नद्यै नदीभ्याम्

नदीभ्यः । नद्याः नद्योः नदीनाम् । नद्याम् नद्योः नदीषु । एवं गौरी सरस्वती ब्राह्मणी कुमारी किशोरीकलभीपार्वतीभवानीप्रभृतयः । [1]लक्ष्मीशब्दस्यईवन्तत्वाभावात्सेर्लोपो नास्ति । लक्ष्मीः लक्ष्म्यौ लक्ष्म्यः । हे लक्ष्मीः । शेषं नदीवत् । स्त्रीशब्दस्य ईवन्तत्वात्सेर्लोपोऽस्ति । स्त्री ।

## स्त्रीभुवोः ॥ १४ ॥

स्त्रीशब्दस्य भूशब्दस्य च इयुवौ भवतः स्वरे परे । स्त्रियौ स्त्रियः हे स्त्रि हे स्त्रियौ हे स्त्रियः ॥१४॥

## वाऽम्शसि ॥ १५ ॥

स्त्रीशब्दस्य अमि शसि च परे वा इयादेशो भवति । स्त्रियम् स्त्रीम् स्त्रियौ स्त्रियः स्त्रीः । स्त्रिया स्त्रीभ्याम् स्त्रीभिः । स्त्रीषु । शेषं नदीवत् । श्रीः श्रियौ श्रियः । हे श्रीः । श्रियम् श्रियौ श्रियः । श्रियौ श्रीभ्याम् श्रीभिः ॥ १५ ॥

---

१ अवी तन्त्रीतरीलक्ष्मीधीह्रीश्रीणामुणादिषु । अपिस्त्रीलिङ्गशब्दानां सिलोप न कदाचन ।

## वेयुवः ॥१६॥

इयुवन्तात्स्त्रियां वर्तमानात्ङितां वचनानां वाऽऽडागमो भवति । स्त्रियास्तु नित्यम् । श्रियै श्रियै श्रीभ्याम् श्रीभ्यः । श्रियाः श्रियः श्रीभ्याम् श्रीभ्यः । श्रियाःश्रियःश्रियोः (श्रियादीनां वामोनुड्वक्तव्यः) श्रियाम् श्रीणाम् । ङौ परेऽडागमाभावे आमोऽप्यभावः । श्रियाम् श्रियि श्रियोः श्रीषु । एवंह्रीधीप्रभृतयोऽप्यनीबन्ताः । एवं भ्रूशब्दोभ्रूशब्दश्च । वधूकरभोरूकच्छूकरङ्कुजम्ब्वादीनां नदीशब्दवद्रूपंज्ञेयम वधूः वध्वौ वध्वः हे वधू । वधूम वध्वौ वधूः । जम्बू जम्ब्वौ जम्ब्वः । हे जम्बु हे जम्ब्वौ हे जम्ब्वः । ऋकारान्तो मातृशब्दः । माता मातरौ मातरः । मातरम् मातरौ मातृः । 'शसि' इति दीर्घत्वम् । शेषं पितृवत् । स्वसृशब्दः कर्तृवत् । नत्वाभावो विशेषः । रैशब्दः सुरैशब्दवत् । नौशब्दो ग्लौशब्दवत् । गोशब्दस्तु पूर्ववत् ॥ १६ ॥ इतिस्वरान्ताः स्त्रीलिंगाः ।

---

१ सुधीसननानीग्रामण्यादयः पुंल्लिंगवत् ।

१० त्वा । ११–कार्–। १२ ग्र ।

# अथ स्वरान्ता नपुंसकलिंगाः ।

अकारान्तो नपुंसकः कुलशब्दः । तस्य प्रथमा-द्वितीयैकवचने—

## अतोऽम् ॥१॥

अकारान्तान्नपुंसकलिंगात्परस्याः स्यमोरम्भवति अधौ । अमो ग्रहणं लुग्व्यावृत्यर्थम् । 'अम्शसारस्य' इत्यकारलोपः । कुलम् ॥ १ ॥

## ईमौ ॥ २ ॥

नपुंसकलिंगात्पर औ ईकारमापद्यते । 'अइए' कुले २

## [1]जश्शसोः शिः ॥ ३ ॥

नपुंसकलिंगात्परयोर्जश्शसोः शिर्भवति । शकारः सर्वादेशार्थः ॥ (गुरुःशिश्च सर्वस्य वक्तव्यः) ॥३॥

## नुमयमः ॥ ४ ॥

नपुंसकस्य [2]नुमागमो भवति शौ परे यमप्रत्याहारान्तस्य न भवति । (मिदन्त्यात्स्वरात्परोवक्तव्यः) ४

---

१ षष्ठी निर्दिष्टस्येत्परस्यापवादः ।

२ नुम इत्यत्र उकार उच्चारणार्थः । मकारः स्थाननियमार्थः ।

## नोपधायाः ॥ ५ ॥

नान्तस्योपधाया दीर्घो भवति शौ परे धिवर्जितेषु पञ्चसु नामि च । कुलानि । हे कुल हे कुले हे कुलानि । पुनरपि कुलम् कुलेकुलानि । शेषं देववत् । एवं मूलफलपत्रपुष्पकुण्डकुटुम्बादयः ॥ ५ ॥ सर्वादीनां यकारान्तानामन्यादिपञ्चशब्दव्यतिरिक्तानां प्रथमाद्वितीययोःकुलशब्दवत्प्रक्रिया । सर्वम् सर्वे सर्वाणि । शेषं पूर्ववत् । अन्यादेर्विशेषमाह—

## स्त्वन्यादेः ॥ ६ ॥

अन्यादेर्गणात्परयोःस्यमोः स्तुर्भवति । शकारः शित्कार्यार्थं उकार उच्चारणार्थः ॥ ६ ॥

## वाऽवसाने ॥ ७ ॥

अवसाने वर्तमानानां झसानां जबा भवन्ति चपा वा । अन्यत् [१]अन्यद् अन्ये अन्यानि । पुनरपि अन्यत् अन्यद् अन्ये अन्यानि । अन्यतरत् अन्यतरद् अन्यतरे अन्यतराणि २ । इतरत् इतरद् इतरे इतराणि २ । कतरत् कतरद् कतरे

---

१ अस्मिन् पदे दत्वमपि भवति ।

कतराणि २ । कतमत् कतमद् कतमे कतमानि २ । शेषं सर्वशब्दवत् । एते चान्यादयः ॥ ७॥

इकारान्तोऽस्थिशब्दः ।

## नपुंसकात्स्यमोर्लुक् ॥ ८ ॥

नपुंसकलिंगात्परयोः स्यमोर्लुग्भवति ।अस्थि॥८॥

## य्वृगाम् ॥ ९ ॥

इश्च उश्च ऋश्च य्वः तेषां य्वृणाम् ॥ (नपुंसके धौ वा गुणो वक्तव्यः ) हे अस्थि हे अस्थे हे अस्थिनी हे अस्थीनि ॥ उक्तं हि-'संबोधने' । तूशनसस्त्रिरूपं शान्तं तथा नान्तमथाप्यदन्तम् । माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः ॥९॥

## नामिनः स्वरे ॥ १० ॥

नाम्यन्तस्य नपुंसकलिंगस्य नुमागमो भवति स्वरे परे 'ईमौ' अस्थिनी अस्थीनि ॥ १० ॥

## अच्चास्थ्नां शसादौ ॥ ११ ॥

अस्थ्यादीनां नुमागमो भवति ईकारस्य चाकारो भवति शसादौ स्वरे परे ॥ ११ ॥

## अल्लोपःस्वरेऽम्बयुक्ताच्छसादौ॥१२॥

नान्तस्योपधाया अकारस्य लोपो भवति शसादौ स्वरे परे मकारवकारान्तसंयोगादुत्तरस्य न भवति। अस्थ्ना अस्थिभ्याम् अस्थिभिः अस्थ्ने अस्थिभ्याम् अस्थिभ्यः । अस्थ्नः अस्थिभ्याम् अस्थिभ्यः । अस्थ्नः अस्थ्नोः अस्थ्नाम् ॥ १२ ॥

## वेङ्योः ॥ १३ ॥

नान्तस्य नाम्न ईङ्योः परयोर्वा अकारस्य लोपो भवति। अस्थ्नि अस्थनि। एवं दधिसक्थ्यक्षिशब्दाः। दध्ना दधिभ्याम् दधिभिः। सक्थि सक्थिनी सक्थीनि २। सक्थ्ना सक्थिभ्याम् सक्थिभिः। वारि वारिणी वारीणि। इति पूर्ववत् प्रक्रिया ॥ १३ ॥

## नपुंसकस्य ह्रस्वः॥ १४ ॥

नपुंसकस्य ह्रस्वो भवति सर्वासु विभक्तिषु

११—कार—। १२ अ ।

परतः । 'नपुंसकात्स्ययोर्लुक्' ग्रामणि[1] । [2]'नामिनः स्वरे' इति नुम् 'ईमौ' । ग्रामणिनी ग्रामणीनि हे ग्रामणे हे ग्रामणि । 'नामिनः स्वरे' 'नोपधाया' इति दीर्घः ॥ १४ ॥

## टादावुक्तपुंस्कं पुंवद्वा ॥ १५ ॥

[3]उक्तपुंस्कं नाम्यन्तं नपुंसकलिंगं टादौ स्वरे परे पुंवद्वा भवति । ग्रामण्या ग्रामणिना ग्रामणिभ्याम् ग्रामणिभिः ॥ ग्रामण्ये ग्रामणिने ग्रामणिभ्याम् ग्रामणिभ्यः । ग्रामण्यः ग्रामणिनः ग्रामण्योः ग्रामणिनोः ग्रामण्याम् । नुमन्तस्यामि दीर्घः । ग्रामणीनाम् 'आम्ङे' । ग्रामण्याम् ग्रामणिनि ग्रामण्याः ग्रामणिनोः ग्रामणिषु । ग्रामणि हे ग्रामणे हे ग्रामणिनी हे ग्रामणीनि । 'अतोम्' [4]सोमपम् सोमपे सोमपानि २ । सोमपेन सोमपाभ्याम् सोमपैः । सोमसोमपाय सोमपाभ्याम् सोमपेभ्यः । इति पूर्ववत् ।

---

१ ग्रामयुतम् । २ स्वरादौवेत् । ३ उक्तः पुमाननेनेत्युक्तपुंस्कम् । एक एव हि यःशब्दस्त्रिषु लिंगेषु जायते ॥ एकमेवार्थमाख्याति उक्तपुंस्कं तदुच्यते । ४ यस्मिन्सोमेनेष्टं तत्कुलम् ।

उकारान्तो मधुशब्दः । "नपुंसकात्स्यमोर्लुक्" मधु । नामिनः स्वरे इति नुमागमः । मधुनी 'जश्शसोः शिः' नोपधायाः' इति दीर्घः । मधूनि ॥ पुनरपि । मधु मधुनी मधूनि । 'नामिनः स्वरे' । मधुनी मधुभ्याम् मधुभिः । पीलु[1] पीलुनी पीलूनि । पीलुन । ऋकारान्तः कर्तृशब्दः । 'नपुंसकात्स्यमोर्लुक्' कर्तृ । 'नामिनः स्वरे' । 'ष्रुनोंणोऽनन्ते' कर्तृणी कर्तॄणि ।२। 'ऋरम्' कर्त्रा कर्तृणा कर्तृभ्याम् कर्तृभिः । कर्त्रे कर्तृणे कर्तृभ्याम् कर्तृभ्यः । 'ऋतोङउः' । स च ङित् 'ङिति टेः' । कर्तुः कर्तृणः कर्तृभ्याम् कर्तृभ्यः कर्तुः कर्तृणः कर्त्रोः कर्तृणोः कर्तॄणाम् । कर्तरि कर्तृणि कर्त्रोः कर्तृणोः कर्तृषु । हे कर्तृ हे कर्तृणी हे कर्तॄणि । ऐकारान्तः अतिरैशब्दः । रामयतिक्रान्तमतिरि कुलम् । नावमतिक्रान्तमतिनु जलम् । ओकारान्तः उपगुशब्दः । उपगता गावो यस्य तदुपगु । उपगु उपगुनी उपगूनि । औकारान्तो नौशब्दः । नावम-

१ पीलुवृक्ष फलं पीलु पीतलं न तु पल्लवे वृक्षे निमित पीलुस्वतन्त्रत्व तत्फले पुनः ।

१ बहुह । २ उ । ... । १० त्वा । ११—कार—। १२ अ ।

तिक्रान्तं यज्जलं तदातिनु आतिनु आतिनुनी आति-
नूनि ॥१॥ इति स्वरान्ता नपुंसकलिंगाः ॥

## अथ हसान्ताः पुल्लिगाः ।

तत्र हकारान्तः पुल्लिगोऽनडुहशब्दः नामसं-
ज्ञायां स्यादयः । (पञ्चस्वनडुह आमागमो वक्तव्यः)

### सावनडुहः ॥ २ ॥

अनडुहशब्दस्य सौ परे नुमागमो भवति ॥१॥

### संयोगान्तस्य लोपः ॥ २ ॥

संयोगान्तस्य लोपो भवति रसे पदान्ते च ।
रेफादुत्तरस्य सकारस्यैव लोपो नान्यस्य ॥२॥

### हसेपः सेर्लोपः ॥ ३ ॥

हसान्तादीबन्ताच्च परस्य सेर्लोपो भवति ।
'उवम्' इति वत्वम् । लोपविधिसामर्थ्यान्न दत्वम् ।
अनड्वान् अनड्वाहौ अनड्वाहः । अनड्वाहम्
अनड्वाहौ अनडुहः । अनडुहा ॥ ३ ॥

### वसां रसे ॥ ४ ॥

वसुस्रंसुध्वंसुभ्रंसुअनडुह इत्येतेषां रसं पदांते

च दत्वं भवति। अनडुद्भ्याम् अनडुद्भिः अनडुहे अनडुद्भ्याम् अनडुद्भ्यः। अनडुहः अनडुद्भ्याम् अनडुद्भ्यः। अनडुहः अनडुहोः अनडुहाम् । अनडुहि अनडुहोः। 'खसेचपाझसानाम्' अनडुत्सु।४।

## धावम् ॥ ५ ॥

अनडुहशब्दस्य धौ परे अमागमो भवति। सवानडुहः। 'उवम्' स्वरहीनं परेण संयोज्यम्। हे अनड्वन् हे अनड्वाहौ हे अनड्वाहः इत्यादि गोदुहशब्दस्य भेदः ॥५॥

## दादेर्घः ॥ ६ ॥

दादेर्धातोर्हकारस्य घत्वं भवति धातोर्झसे परे नाम्नश्वरसे पदांते च। गोदुघासि इति स्थिते॥६॥

## आदिजबानां झभान्तस्य झभाश्च स्ध्वोः ॥ ७ ॥

धातोर्झभान्तस्यादौ वर्तमानानां जबानां झभा भवन्ति सकारेध्वशब्दे च परे नाम्नश्वरसे पदांते च

## वावसाने ॥ ८ ॥

अवसाने वर्तमानानां झसानां जबा भवन्ति चपा वा । [1]गोधुक् । गोधुग् गोदुहौ गोदुहः । गोधुत्तु हे गोधुक् हे गोधुग् हे गोदुहौ हे गोदुहः । गोदुहम् गोदुहौ गोदुहः भकारादौ 'दादेर्घः' इति घत्वे । आदिजबस्य झभे धकारे कृते 'झबे जबा' गोधुग्भ्याम् गोधुग्भिः 'खसे चपा झसानाम्' क्विलात्षः सः कृतस्य इति षत्वम् । कषसंयोगे क्षः गोधुक्षु ॥ ८ ॥ मधुलिह शब्दस्य विशेषः ।

## हो ढः ॥ ९ ॥

धातोर्हकारस्य ढत्वं भवति झसे परे नाम्नश्च रसे पदान्ते च 'वाऽवसाने' । मधुलिट् मधुलिड् मधुलिहौ मधुलिहः । हे [2]मधुलिट् हे मधुलिड् हे मधुलिहौ हे मधुलिहः । मधुलिहम् मधुलिहौ मधुलिहः । मधुलिहा मधुलिड्भ्याम् मधुलिड्भिः ॥ ९ ॥ तुरासाहशब्दस्य भेदः

---

१ गो दुहतीति गोधुग् आभीरः । २ इन्द्रः ।

## सहेः षः साढि ॥ १० ॥

साढिरूपे सति सहधातोः सकारस्य षकारदेशो भवति । [१]तुराषाट् तुराषाड् इत्यादि ॥ १० ॥

दुहशब्दस्य भेदः ।

## द्रुहादीनां घत्वढत्वे वा ॥ ११ ॥

द्रुहादीनां धातूनां घत्वढत्वे वा भवतो रसे पदान्ते च । मित्रध्रुक् मित्रध्रुग् मित्रध्रुट् मित्रध्रुड् मित्रद्रुहौ मित्रद्रुहः । मित्रद्रुहा 'झभे जबाः' मित्रध्रुग्भ्याम् मित्रध्रुड्भ्याम् । मित्रध्रुट्सु इत्यादि । एवं तत्वमुह-स्नुहादयः ॥ ११ ॥ रेफान्तश्चतुर् शब्दो नित्यं बहुवचनान्तः ।

## चतुराम् शौ च ॥ १२ ॥

चतुरशब्दस्यामागमो भवति पञ्चसु परेषु शौ च । चत्वारः चतुरः चतुर्भिः चतुर्भ्यः ॥ १२ ॥

## रः संख्यायाः ॥ १३ ॥

रेफान्तसंख्यायाः परस्यामो नुडागमो भवति ।

---

१ एवमेव पृतनाषाट् हव्यवाट् प्रष्ठवाट् भारवाड् प्रभृतयः ।

णत्वं द्वित्वं च । चतुर्णाम् चर्तुषु ॥ नकारान्ता राजन् शब्दः । 'नोपधायाः' इति पञ्चसु दीर्घः ॥ १३ ॥

## नाम्नो नो लोपशू धौ ॥ १४ ॥

नाम्नो नकारस्यानागमजस्य लोपशू भवति रसे पदान्ते [1]चाधौ । राजा राजानौ राजानः । हे राजन् हे राजानौ हे राजानः । हे राजानम् । राजानौ । अल्लोपः स्वरेम्वयुक्ताच्छसादौ । 'स्तोः श्चुभिःश्चुः' इति चुत्वे नकारस्य ञकारः ॥ १४ ॥

## जञोर्ज्ञः ॥ १५ ॥

जकार ञकारयोगे[2] ज्ञो भवति । राज्ञः राज्ञा राजभ्याम् राजभिः । राज्ञे राजभ्याम् राजभ्यः 'वेङ्योःराज्ञि राजनि राज्ञोः राजसु इत्यादि । एवं यज्वन् आत्मन् सुधर्मन् प्रभृतयः । यज्वा यज्वानौ यज्वानः । यज्वानम् यज्वानौ । 'अम्वयुक्तान्' इति विशेषणादल्लोपो नास्ति ।

---

१ चकारात्क्वचिन्नाम्नो नकारस्य लोपश् न भवति । सुष्ठु-हिनस्ति पापमिति सुहिन् इत्यादौ । २ योगो नामोभयतः संबंधः ।

यज्वना इत्यादि श्वन् युवन् मघवन् शब्दानां पञ्चसु राजन्शब्दवत्प्रक्रिया । शसादौ तु विशेषः ॥ १५ ॥

## श्वादेर्व उः ॥ १६ ॥

श्वादेर्वकारस्य उत्वं भवति शसादौ स्वरे परेऽतद्धिते ईपि [1]इकारे च । [2]शुनः । शुना श्वाभ्याम् श्वभिः इत्यादि । युवन्शब्दे वकारस्योत्वे कृते सवर्णदीर्घः मघोनः मघोना मघवभ्यामित्यादि । पथिन् शब्दस्य भेदः ॥ १६ ॥

## इतोऽत्पञ्चसु ॥ १७ ॥

पथ्यादीनामिकारस्याकारादेशो भवति पञ्चसु स्यादिषु परेषु ॥ १७ ॥

## थो न्तुट् ॥ १८ ॥

पथ्यादीनां थकारस्य नुडागमो भवति पञ्चसु स्यादिषु परेषु । पन्थन् सि इति स्थिते ॥ १८ ॥

---

१ अतद्धिते इत्यननुवृत्तावपि । श्वयुवमघोनामतद्धिते इति पाणिनीयसूत्रान्नियामकादत्रात्वं भवति तद्धिते तु न ।

२ तकारान्तमघवच्छब्दस्य तु मघवता मघवद्भ्यामित्यादीनि भिन्नान्येव रूपाणि ।

## आ सौ ॥ १९ ॥

पथ्यादीनां टेरात्वं भवति सौ परे । पन्थाः पन्थानौ पन्थानः । आत्वविधानान्न सुलोपः । हे पन्थाः पन्थानम् पन्थानौ । पथिन् अस् इति स्थिते ।१९।

## पथां टेः ॥ २० ॥

पथ्यादीनां टेर्लोपो भवति शसादौ स्वरे परे । पथा पथिभ्याम् पथिभिः इत्यादि । [1]एवंमथिन् [2]ऋभुक्षिन् शब्दाः । दण्डिन् शब्दस्य भेदः॥२०॥

## इनां शौ सौ ॥ २१ ॥

इन् हन् पूषन् अर्यमन् इत्येतेषां शौ सौ चाधौ परे उपधाया दीर्घो भवति । नलोपसिलोपौ । दण्डी दण्डिनौ दण्डिनः । दण्डिनं दण्डिनौ दण्डिनः दण्डिना दण्डिभ्याम् दण्डिभिः इत्यादि । एवं ब्रह्मनशब्दः । ब्रह्महा ब्रह्महणौ ब्रह्महणः । हे ब्रह्मन् हे ब्रह्महणौ हे ब्रह्महणः । ब्रह्महणम् ब्रह्महणौ शसादौ त्वकारलोपः ॥ २१ ॥

---

१ मन्थनदण्डः । २ इन्द्रः । आखण्डलः सहस्राक्ष ऋभुक्षाः इत्यमरः ।

## हनोघ्ने ॥ २२ ॥

हन्तेर्धातोर्हकारस्य घकारो भवति नकार ञ्णिति च परे। घसंयोगो णत्वनिषेधार्थः। ब्रह्मघ्नः ब्रह्मघ्ना ब्रह्महभ्याम् ब्रह्महभिः इत्यादि पूषा पूषणौ पूषणः। हे पूषन् हे पूषणौ हेपूषणः पूषणम् पूषणौ ॥ २२ ॥

## षणोः ष्णः ॥ २३ ॥

षकारणकारसंयोगे ष्णो भवति शसादौ स्वरे परे पूषन्शब्दस्य शसादौ स्वरे परे वा टेर्लोपः। पूष्णः पूषा पूष्णा पूषभ्याम् पूषभिः। पूषे पूष्णे। ङौ टिलोपो वेति केचित्। पूष्णि पूषणि पूष्णो। पूषसु अर्यम्णः अर्यम्णा अर्यमभ्याम्। इत्यादि संख्या शब्दाः पञ्चन्प्रभृतयो बहुवचनान्ताः त्रिषु लिंगेषु सरूपाः। पञ्चन् जस् इति स्थिते ॥ २३ ॥

## जश्शसोर्लुक् ॥ २४ ॥

षकारनकारान्तसंख्यायाः परयोर्जश्शसोर्लुक् भवति। प्रत्ययलोपे प्रत्ययलक्षणम्। लुकि न तन्नि

मित्तम् । पञ्च पञ्च पञ्चभिः पञ्चभ्यः २ ॥२४॥

## ष्णः ॥ २५ ॥

षकारनकारान्तसंख्यायाः परस्यामो नुडागमो भवति । नोपधाया इति दीर्घः । 'नाम्नो नो लोपशधौ' पञ्चानाम् । पंचसु । एवं सप्तन् नवन् दशन् प्रभृतयः । अष्टन् शब्दस्य भेदः ॥ २५ ॥

## अष्टानो डौ वा ॥ २६ ॥

अष्टन् शब्दात्परयोर्जश्शसोर्वा डौ भवति । डित्वाट्टिलोपः । अष्टौ अष्टौ । अष्ट[1] अष्ट ॥२६॥

## वाऽऽसु ॥ २७ ॥

वा आ आसु इति छेदः । अष्टन आसु परासु विभक्तिषु वा टेरात्वं भवति । अष्टभिः अष्टाभिः अष्टभ्यः २ अष्टाभ्यः २ अष्टानाम् अष्टसु अष्टासु ॥२॥ मकारान्त इदम् शब्दः ॥ २७ ॥

## इदमोऽयं पुंसि ॥ २८ ॥

इदम्शब्दस्य पुंसि विषये अयमादेशो भवति

---

१ तन्निमित्तं कार्यं न स्यादित्यर्थः । तेन नोपधाया इति दीर्घो न

सिसहितस्य । अयम् । द्विवचनादौ इदम् औ इति स्थिते 'त्यदादेष्टेरः स्यादौ' इत्यकारः ॥२८॥

## दस्य मः ॥ २९ ॥

त्यदादीनां दकारस्य मत्वं भवति स्यादौ परे । इमौ । सर्वादित्वात् 'जसी' इतीकारः त्यदादीनां घेरभावः । इमम् इमौ इमान् ॥ २९ ॥

## अन टौसोः ॥३०॥

इदमोऽनादेशो भवति टौसोः परयोः अनेन॥३०॥

## स्भ्यः ॥ ३१ ॥

इदमः सकारे भकारे च परे अकारो भवति कृत्स्नस्य । आद्धि इत्यात्वम् । आभ्याम् ॥३१॥

## भिस् भिस् ॥३२॥

इदमसोर्भिस् भिसेव भवति न भकारस्याकारः । 'एस्भिबहुत्वे' एभिः अस्मै आभ्याम् एभ्यः । अस्मात् आभ्याम् एभ्यः । अस्य [1]अनयोः एषाम् । अस्मिन्

१ पाणिनीयद्वितीयायां टौसोश्च इदम् एनादेशो भवति ।

अनयोः [१]एषु । किम् शब्दस्य त्यादादेष्टेरः स्यादौ इत्याकारे कृते सर्वशब्दवद्रूपम् । कः कौ के । कम् कौ कान् इत्यादि । धकारान्तस्तत्वबुधशब्दः । तस्यरसे पदान्ते बकारस्य '[२]आदिजबानाम्' इति भकारः । 'वाऽवसाने' तत्वभुत् तत्वभुद् तत्वबुधौ तत्वबुधः हे तत्वभुत्, हे तत्वभुद् तत्वबुधम् तत्वबुधौ तत्व-बुधः तत्वबुधा तत्वभुद्भ्याम् तत्वभुद्भिः इत्यादि । एवं मर्मवित् ॥ ३२॥ जकारान्तः सम्राज्शब्दः ॥

## छशषराजादेः षः ॥ ३३ ॥

छकारान्तस्य शकारान्तस्य षकारान्तस्य च राज यज्सृज्मृज्भ्राजादेश्च [३]षकारो भवति धातो-र्झसे परे नाम्नश्च रसे पदान्ते च ॥ ३३ ॥

## षो डः ॥ ३४ ॥

षकारस्य डत्वं भवति धातोर्झसे परे नाम्नश्च

---

१ इदमः प्रत्यक्षभवे समीपतरवर्त्ति चैतदो रूपम् । अद-सस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ।

२ आदिशब्दात् ग्रश्चभ्रस्जपरिव्राजां ग्रहणम् ।

३ षस्य षविधानं डत्वनिषेधार्थम् आदिशब्दादेवं देवेट् विश्वसृट् परिमृट् विभ्राट् तत्वृट् यवभृट् एवं हुतभुक् ऋत्विक् वणिक् भिषक् अश्वयुक् प्रभृतयो ज्ञान्ताः ।

रसे पदान्ते । 'वावसाने' इति टकारो डकारश्च । सम्राट् सम्राड् सम्राजौ सम्राजः । सम्राजम् सम्राजौ सम्राजः सम्राजा सम्राड्भ्याम् सम्राड्भिः । इत्यादि एवं विराजादयः । दकारान्तास्त्यद्तद्यद्एतद् शब्दाः । एतेषां त्यादेष्टेरः स्यादौ. इति सर्वत्राकारे कृते सर्वशब्दवद्रूपं ज्ञेयम् ॥ ३४ ॥

## स्तः ॥ ३५ ॥

त्यदादेस्तकारस्य सौ परे सत्वं भवति । स्यः त्यौ त्ये । त्यम् त्यौ त्यान् । सः तौ ते । तम् तौ तान् । यः यौ ये यम् यौ यान् । एषः एतौ एते । (एतदोऽन्वा[१]-देशे द्वितीया टौस्सचेनो वा वक्तव्यः❀) उक्तस्य पुनरुक्तिरन्वादेशः । यथाऽनेन व्याकरणमधीतमेनं छन्दोऽध्यापय । एतम् एनम् एतौ एनौ एतान् एनान् । एतेन एनेन एताभ्याम् एतैः । एतयोः एनयोः एतेषाम् । एतस्मिन् एतयोः एनयोः एतेषु । छकारान्तस्तत्वप्राछ् शब्दः । तत्वप्राट् तत्वप्राड् तत्वप्राछौ तत्वप्राछः । इत्यादि । थकारान्तोऽग्निमथ्शब्दः तस्य 'वावसाने' चपा-

१ उक्तस्य पुनर्भाषण मन्वादेशः ।

जवाश्च । अग्निमत् अग्निमद् अग्निमथौ अग्निमथः संबोधनेऽप्येवम् । अग्निमथं अग्निमथौ अग्निमथः अग्निमथा अग्निमद्भ्याम् इत्यादि ॥ ३५ ॥ चकारान्तः प्रत्यञ्चशब्दः ।

## नोलोपः ॥ ३६ ॥

धातोर्हसान्तस्योपधाभूतस्य नस्य लोपो भवति । ( अञ्चः पञ्चसु नुम् वक्तव्यः❀ ), प्रत्यन् च सि इति स्थिते । 'स्तोः श्चुभिः श्चुः' इति चुत्वेनात्र ञकारः । संयोगान्तस्य लोपः ॥ ३६ ॥

## चोः कुः॥ ३७ ॥

चवर्गस्य कवर्गादेशो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च यथासंख्येन । प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चम् प्रत्यञ्चौ ॥३७॥

## अञ्चेरलोपो दीर्घश्च ॥ ३८ ॥

अञ्चेर्धातोरकारस्य लोपो भवति पूर्वस्य च दीर्घः शसादौ स्वरे परे तद्धिते प्रत्यये ईपि इकारे च । निमित्ताभावे नैमित्तकस्याप्यभावः । प्रतीचः । प्रतीचा । प्रत्यग्भ्याम् । प्रत्यग्भिः । प्रत्य-

ञ्चु । एवं तिर्यञ्चप्रभृतयः । तिर्यङ् तिर्यञ्चौ तिर्यञ्चः । तिर्यञ्चम् तिर्यञ्चौ ॥ ३८ ॥

## तिरश्चादयः ॥ ३९ ॥

तिरश्चादयो निपात्यन्ते शसादौ स्वरे परे तद्धिते ईपि इकारे च । तिरश्चः । तिरश्चा तिर्यग्भ्याम् तिर्यग्भिः । तिर्यक्षु । एवम् उदङ् उदञ्चौ उदञ्चः । उदञ्चम् उदञ्चौ ( उदञ्च् शब्दस्य उदीच इति निपात्यते शसादौ स्वरे परे )। उदीचः । उदीचा । समीचः समीचा इत्यादि । तकारान्तो मरुच्छब्दः । 'वावसाने' मरुद् मरुत् इत्यादि एवमग्निचित् प्रभृतयः ॥३९॥ तकारान्त उकारानुबन्धो महच्छब्दः ॥

## [२]उगितो नुम् ॥ ४० ॥

उकारानुबन्धस्य ऋकारानुबन्धस्य च नुमागमो भवति पुंसि पञ्चसु परेषु ॥ ४० ॥

## न्सम्महतोऽधौ दीर्घः शौ च ॥४१॥

न्सन्तस्याप्शब्दस्य महच्छब्दस्य च उपधाया

---

१ तिर्यञ्च् उदञ्च् सध्यञ्च् सम्यञ्च् शब्दानां यथाक्रमं तिरश्च उदीच् सधीच् समीच् इत्यादेशा निपात्यन्ते । २ उश्च ऋश्च उऋत्-ऋ यस्य स उगित् तस्य उगितः ।

दीर्घो भवति पञ्चसु धिवर्जितेषु शौ च परे। महान् महान्तौ महान्तः। हे महन्। महान्तं माहन्तौ महतः। महता महद्भ्याम् महद्भिः इत्यादि ॥ ४१ ॥ उकारानुबन्धो भवच्छब्दः।

## अत्वसोः सौ ॥ ४२ ॥

अत्वन्तस्यासन्तस्य च दीर्घो भवति धिवर्जितेषु सौ च परे। भवान् भवन्तौ भवन्तः। हे भवन्। भवन्तम् भवन्तौ भवतः। भवता भवद्भ्याम्। इत्यादि ऋकारानुबन्धपचतृशब्दस्य नुमागम एव न दीर्घः। पचन् पचन्तौ पचन्तः। इत्यादि। एवं ऋकारानुबंधो भवच्छब्दोऽपि। शकारांतो विश्शब्दः। 'छशषराजादेः षः, इति षत्वम् 'षोडः' इति षकारस्य डत्वं च 'वाऽवसाने' 'चपा जबाश्च' विट् विड् विशौ विशः इत्यादि। षकारान्तः षष्शब्दो नित्यं बहुवचनान्तस्त्रिषु सरूपः। 'जश्शसोर्लुक्'। 'षोडः'। षट् षड् २ षड्भिः षड्भ्यः २ 'ष्णः' इति नुडागमः। षड्नाम् इति स्थिते ॥ ४२ ॥

## ड् णः ॥ ४३ ॥

षान्तसंख्यासम्बन्धिनो डकारस्य णत्वं भवति

नामि परे । 'ष्टुभिः ष्टुः' षण्णाम् षट्सु । क्वचिद्पदान्ते पदान्तताश्रयणीया[1] ॥ ४३ ॥

## दोषां रः ॥ ४४ ॥

दोष् सजुष् आशिष् हविष् प्रभृतीनां षकारस्य रेफो भवति रसे पदान्ते च । दोः दोषौ दोषः । दोषम् दोषौ [दोष्शब्दस्य शसादौ स्वरे परे नान्तता वा वक्तव्या] दोषः दोष्णः । दोषा दोष्णा । दोर्भ्याम् दोषभ्याम् इत्यादि । [2]सजूः सजुषौ सजुषौ सजुषः । [ सजुषाशिषो रसे पदान्ते च दीर्घो वक्तव्यः ] सजूर्भ्यामित्यादि ॥ ४४ ॥ शकारान्तः पुंस्शब्दः ।

## पुंसोऽसुङ् ॥ ४५ ॥

पुंस्शब्दस्य पंचसु परेष्वसुङादेशो भवति । ङकारो अन्त्यादेशार्थः उकारो नुम्विधानार्थः ।४५।

## स्वरे मः ॥ ४६ ॥

अनुस्वारस्य मकारो भवति स्वरे परे । पुमस् सि इतिस्थितेवाति 'तोनुम्' 'न्सम्महतोऽधौ दीर्घः शौ च' हसेपः इति सेर्लोपः । संयोगान्तस्य लोपः ।

---

१ ग्रहणीया । वक्तव्येति भावः । २ सजूमित्रम् ।

पुमान् पुमांसौ पुमांसः । हे पुमन् । पुमांसम् पुमांसौ पुंसः । पुंसा पुंभ्याम् पुंभिः इत्यादि ॥४६॥

### असंभवे पुंसः कवसौ ॥ ४७ ॥

[1]वेदान्तैकवेद्यस्यात्मनो बहुत्वासंभवेऽर्थेवाच्ये सति पुंस् शब्दस्य सुपि परे कगागमो भवति ।४७।

### स्कोराद्योश्च ॥ ४८ ॥

संयोगाद्योःसकारककारयोर्लोपो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । कषसंयोगे क्षः पुंक्षु[2] । एवं विद्वस् शब्दः । विद्वान् विद्वांसौ विद्वांसः । विद्वांसम् विद्वांसौ ॥ १८ ॥

### वसोर्वं उः ॥ ४९ ॥

वसोःसम्बन्धिनो वकारस्य उत्वंप्राप्नोति शसादौ स्वरे परे ताद्धिते ईपि इकारेच । विदुषः विदुषा 'वसां रसे' विद्वद्भ्याम् विद्वद्भिः । विद्वत्सु इत्यादि । सुवचस् शब्दे तु अत्वसोःसौ, इतिदीर्घः । सुवचाः । सुवचसौ । सुवचसः । हे सुवचः । सुव-

---

१ 'एकमेवाद्वितीयं ब्रह्म' इति श्रुत्या प्रतिपादितस्य ।

२ पाणिनीयागमविरुद्ध मिदम् । पाणिनीयास्तु कगागमम-निच्छन्ति अत्र सुपि पुंसु इत्येव रूपं साधयन्ति ।

चसम् सुव चसौ सुवचसः । सुवचसा । 'सोर्विसर्गः' 'हवे' । उत्वम् । उभो । सुवचोभ्याम् सुवचोभिः । एवं चन्द्रमस् । उशनस्शब्दस्यविशेषः ॥ ४६ ॥

## उशनसाम् ॥ ५० ॥

उशनस् पुरुदस् अनेहस् इत्येतेषांसेरधेर्डा भवति डकारष्टिलोपार्थः । उशनाउशनसौ उशनसः (उशनसौ धौ सान्तता नान्तता अदन्तता च वक्तव्या) हे उशनः हे उशन[१] हे उशनन् । अदस् शब्दस्य विशेषः 'त्यदादेष्टेः स्यादौ' इति सर्वत्राकारः अद सि इति स्थिते ॥ ५० ॥

## सौ सः ॥ ५१ ॥

अदसो दकारस्य सौ परे सत्वं भवति ॥ १ ॥

## सेरौ ॥ ५२ ॥

अदसः सेरोकारादेशो भवति । असौ द्विवचने अद औ इति स्थिते । दस्य मः ॥ ५२ ॥

## मादू ॥ ५३ ॥

उश्च उश्च ऊ । आदसो मकारस्य परस्य

---

१ संबोधने तूशनसस्त्रिरूपम् उशना शुक्रः ।

ह्रस्वस्य ह्रस्व उकारो भवति दीर्घस्य च दीर्घ ऊकारो भवति । अम् बहुवचने सर्वादित्वात् 'जसी' 'अ इ ए' अमे स्थिते ॥ ५३ ॥

## एरी बहुत्वे ॥ ५५ ॥

बहुते सत्यदस एकारस्य इकारो भवति । अमी । अमुम् अमू अमून् तृतीयादौ । मत्वे उत्वे च कृत टानास्त्रियाम् । अमुना । द्विवचने 'आद्धि, इत्यात्वं पश्चादूकारः । अमूभ्याम् ॥ ५४ ॥

## भिस् भिस् ॥ ५५ ॥

इदमदसोर्भिस् भिसेव भवति न मकारस्याकारः । अमीभिः । अमुष्मै अमूभ्याम् अमीभ्यः । अमुष्मात् अमूभ्याम् अमीभ्यः । अमुष्य । ओसि एत्वे अयादेशे च कृते पश्चादुकारः । अमुयोः अमीषाम् । अमुष्मिन् अमुयोः अमीषु ॥ ५५ ॥

## सामान्य अदसः कःस्यादिवच्च ॥५६॥

अमुकः अमुकौ अमुके पुल्लिंगे सर्ववत् ॥५६॥

इति हसान्ताः पुल्लिंगाः ।



# अथ हसान्ताः स्त्रीलिंगाः ।

## हकारान्त उपानह्[1] शब्दः ।

## नहो धः ॥ १ ॥

नहो हकारस्य धकारादेशो भवति रसे पदान्ते च 'वावसाने' इति तत्वं दत्वं च । उपानत् उपानद् उपानहौ उपानहः उपानहा उपानद्भ्याम् उपानद्भिः इत्यादि ॥ १ ॥ वकारान्तो दिव शब्दः ।

## दिव औ सौ ॥ २ ॥

दिवो वकारस्य औकारादेशो भवति सौ परे । द्यौः दिवौ दिवः । हे द्यौः । ॥२॥ दिव् अम् इति स्थिते ।

## वाम्या ॥ ३ ॥

दिवो वकारस्य अमि परेवा आत्वं भवति । द्याम् दिवम् दिवौः दिवा ॥ ३ ॥

## उ रसे ॥ ४ ॥

दिवो वकारस्य रसे परे उकारा भवति । द्युभ्याम् द्युभिः द्युषु इत्यादि ॥४॥ रेफान्तश्चतुर् शब्दो नित्यं बहुवचनान्तः ।

---

[1] पादत्राणम् ।

## त्रिचतुरोः स्त्रियां तिसृचतसृवत् ।५।

स्त्रियां वर्तमानयोस्त्रिचतुरशब्दयोस्तिसृ चतसृ इत्येतावादेशौ भवतो विभक्तौपरतःऋकारस्यऋकारवत् ततः 'स्तुरार्' इत्यादि सूत्रः ऋदन्तशब्द कार्यं न भवति । किन्तु 'ऋरम्' भवति । तिस्रः तिस्रः तिसृभिः तिसृभ्यः ॥ ५ ॥

## ननामि दीर्घः ॥ ६ ॥

तिसृ चतसृ इत्येतयोः दीर्घो न भवति नामि परे छन्दसि वा।तिसृणाम्।छन्दसितुवाभवति। तिसृणाम् तिसृषु। एवं चतसृशब्दः।६।गिर्शब्दस्य भेदः।

## य्वोर्विहसे ॥ ७ ॥

[१]धातोरिकारोकारयोर्दीर्घो भवति रेफवकारयोर्हसपरयोः पदान्ते च । गीः । गिरौ गिरः । गिरम् गिरौ गिरः । हे गीः । गिरा गीर्भ्याम् गीर्भिः । गीर्षु । एवं धूः धुरौ धुरः हे धूः । पूः पुरौ पुरः हे पूः हे पुरौ हे पुरः । पूर्भ्याम् पूर्भिः । पूर्षु । धकारान्तः समिच्छब्दः 'वावसाने' समित् समिद्

१ धातुसम्बन्धिनः ।

समिधौ समिधः । समिधम् समिधौ समिधः । हे समित् हे समिद् । समिद्भ्याम् समिद्भिः । समित्सु[1] । भकारान्तः ककुभ् शब्दः । [2]ककुप् ककुब् ककुभौ ककुभः । हे ककुप् हे ककुब् इत्यादि दकारान्ता [3]त्यद् तद् यद् एतद् शब्दाः । 'स्त' त्यदादेस्तकारस्य सत्वं भवति सौ परे । इति सकारः । 'त्यदादेष्टेरः स्यादौ' इति सर्वत्राकारः । 'आवतः स्त्रियाम्' इत्याप् । स्या त्ये त्याः । सा ते ताः । या ये याः । एषा एते एताः । अन्वादेशे । एतान् एनाम् एते एने एताः एनाः । एतया एनया । एतयोः एनयोः । एवं किम् । का के काः ॥ ७ ॥

## इयं स्त्रियाम् ॥ ८ ॥

इदम् शब्दस्य स्त्रियामियं भवति सौ परे सिसहितस्य । इयम् इमे इमाः । इमाम् इमे इमाः । अनया आभ्याम् आभिः । अस्यै आभ्याम् आभ्यः इत्यादि चकारान्तस्त्वच् शब्दः । चोःकु इति कुत्वम् त्वक्

---

१ एवं वीरुध् क्षुध् क्रुध् शब्दाः । २ पकारःसिलापार्थः सवर्णे दीर्घः सह, इति दीर्घे कृते स्त्रियां सर्वशब्दस्येव रूपम् । ३ त्यच्छब्दस्य प्रायश्छन्दस्यप्रयोगः स च त्यश्चाभवत् ।

त्वग् त्वचौ त्वचः । त्वग्भ्याम् । त्वक्षु । हे त्वक् हे त्वग् । एवं ऋत्वगाद्प्रभृतयः[1] । अपशब्दो नित्यः [2]बहुवचनान्तः । अप् जस् इति स्थिते । "न्स-म्महन्तः" इति दीर्घः आपः । द्वितीयाबहुवचने पञ्चस्विति विशेषणान्न दीर्घः । आपः ॥ ८ ॥

## भि दपाम् ॥ ९ ॥

अबादीनां भकारे परे दत्वं भवति । अद्भिः अद्भ्यः २ अपाम् । अप्सु ॥ ९ ॥ शकारान्तो दिशशब्दः ।

## दिशां कः ॥ १० ॥

दिश् दृश्स्पृश्इत्यादीनां रसे पदान्ते च कत्वं भवति । दिक् दिग् दिशौ दिशः । हे दिक् हे दिग् । दिशम् दिशौ दिशः । दिशः । दिग्भ्याम् दिग्भिरित्यादि । षकारान्तास्त्विषशब्दः । 'षोडः' इति डत्वम् । 'वावसाने' इति टकारः । त्विट् त्विड् त्विषौ त्विषः त्विषा । त्विड्भ्याम् त्विड्भिः । इत्यादि । आशिष् शब्दः सजुष्शब्दवत् आशीः आशिषौ आशिषः । आशीर्भ्याम् । आशीःषु आशीष्षु । हे आशीः ।

---

१ अत्र तकारान्ता याषित् सरित् तडित् विद्युत्प्रभृतयः ।

२ अपामिति बहुवचनस्य नित्यं बहुवचनान्तत्वेज्ञापकम् ।

स्त्रीलिंगस्यादस्शब्दस्य सा न विशेषः । द्विवचनादौ टेरेत्वे कृते अनन्तर 'आवतःस्त्रियाम्' इत्यादीर्घत्वं विभक्तिकार्यं च । पश्चात् 'मादू' इति ह्रस्वस्य ह्रस्व उकारो दीर्घस्य दीर्घ ऊकारश्च । असौ अमू अमूः अमुम् अमू अमूः । अमुया अमूभ्याम् अमूभिः । अमुष्यै अमूभ्याम्ः । अमूभ्यः। अमुष्याः अमूभ्याम् अमूभ्यः । अमुष्याः । अमुयोः अमूषाम् । अमुष्याम् अमुयोः अमूषु ( सामान्ये अदसः कः ) अमुका अमुके अमुकाः इत्यादि स्त्रीलिंगे सर्वशब्दवद्रूपं ज्ञेयम् ॥ १० ॥

इति हसान्ताः स्त्रीलिंगाः ।

## अथ हसान्ताः नपुंसकलिंगाः ।

रेफान्तो वार् शब्दः ।

### नपुंसकात्स्यमोर्लुक् ॥ १ ॥

वाः वारी वारि । अयम् इति विशेषणात् नुम् भवति । वारा वार्भ्याम् वार्भिः वार्षु । इत्यादि । चतुर्शब्दस्य 'चतुरांशौ च' इत्याम् । चत्वारि ।

त्वारि । चतुर्भिः चतुर्भ्यः । चतुर्णाम् । [1]चतुर्षु ॥ १ ॥ नकारान्तोऽहन् शब्दः ।

## अह्नः सः ॥ २ ॥

अहन् शब्दस्य नकारस्य सकारो भवति रसे पदान्ते च । 'सोर्विसर्गः' अहः । 'इमौ' 'वेङ्यो:' । अह्नी अहनी अहानि २ । अह्ना अहोभ्याम् अहोभिः । अह्ने अहोभ्याम् अहोभ्यः । अह्नः अहोभ्याम् अहोभ्यः । अह्नः अह्नोः अह्नाम् । अह्नि अहनि अह्नोः अहःसु (ब्रह्मन्शब्दस्य रसे पदान्ते च नस्य लोपो वा वक्तव्यः) ब्रह्म ब्रह्मणी ब्रह्माणि २ । ब्रह्मणा ब्रह्मभ्याम् ब्रह्मभिः इत्यादि । ( संबोधने धौ नपुंसके नलोपो वा वक्तव्यः❀) हे ब्रह्म हे ब्रह्मन् ! एवं चर्मन् कर्मन् व्योमन् दामन् नामन् प्रभृतयः[2] । [नान्ताद्दन्ताच्छन्दसि ङिश्यो: वा लोपो वक्तव्यः] (छन्दस्यागमजानागमजयोर्लोपालोपौ च वा वक्तव्यौ) परमेव्योमन् । सर्वा भूतानि । त्यदादीनां स्यमो-

---

१ अथ प्रियचतुर्षु बहुवचनतां गौणत्वे प्रियाश्चत्वारो यस्येति विग्रहे प्रियचतुः प्रियचतुरो प्रियचत्वारि । त्रिशब्दे प्रियातिस्रो यस्येति प्रियतिसृ प्रियतिसृणी प्रियतिसृणि इत्यादि ॥

२ एतेषां अल्लोपस्करे, इत्यकारलोपो न भवति ।

लुंकि कृते टेरत्वं भवति। स्मादाविति विशेषणात्। द्विवचनादौ टेरत्वे कृते सर्वशब्दवद्रूपं ज्ञेयम्। त्यत् त्यद् त्ये त्यानि। पुनः त्यत् त्यद् त्ये त्यानि। त्येन त्याभ्याम् त्यैरित्यादि। एवं तत् तद् ते तानि २। यत् यद् ये यानि २। एतत् एतद् एते एतानि। किम् के कानि २। इदम् इमे इमानि तृतीयादौ सर्वत्र पुंवत्। चकारान्तः प्रत्यञ्चशब्दः। प्रत्यक् २ प्रत्यग् २ अञ्चेरल्लोपो दीर्घश्च। प्रतीची २। यमः। प्रत्यञ्चि। तकारान्तो जगत् शब्दः। जगत् (द्) जगती जगन्ति२। जगद्भ्याम् जगद्भिः। इत्यादि। महच्छब्दे तु न सम्महतः—इति विशेषणात् सिविषये दीर्घत्वम् महत् महद् महती महान्ति २। इत्यादि। षकारान्तो हविष्शब्दः सजुष्च। हविः हविषी हवींषि इत्यादि। सजूः सजूषी सजूंषि २। एवं सकारान्ताः पयस्तेजस्प्रभृतयः। पयः पयसी पयांसि २। पयसा पयोभ्यामित्यादि। अदश्शब्दस्य स्यमोर्लुकि कृते 'स्रोर्विसर्गः'। द्विवचनादौ टेरत्वे कृते मत्वोत्वे अदः अमू अमूनि २। अमुना[1]

---

[1] अमुना इति छन्दसो रूपम् अमुना भगवद्रूपमितिश्रीमद्भागवते

अमूभ्याम् अमीभिः । अमुष्मै अमूभ्याम् अमीभ्यः २ ॥ अमुष्य अमुयोः । अमीषाम् । अमुष्मिन् अमुयोः अमीषु । शेषं पुल्लिंगवत् ॥ ३ ॥ इति हसान्ताः नपुंसकलिंगाः ।

## अथ युष्मदस्मत्प्रक्रिया ।

अथ युष्मादस्मदोः स्वरूपं निरूप्यते । तयोश्च [2]वाच्यलिंगत्वात् त्रिष्वपि[3] लिंगेषु समानं रूपम् ।

### त्वमहं सिना ॥ १ ॥

युष्मदस्मदोः सिसहितयोस्त्वमहमित्येतावादेशौ भवतः यथासंख्येन । त्वम् अहम् ॥ १ ॥

### युवावौ द्विवचने ॥ २ ॥

युस्मदस्मदोर्द्विवचने परे युवावावित्येतावादेशौ भवतः ॥ २ ॥

### आमौ ॥ ३ ॥

युष्मदस्मदोःपर औ आम् भवति । युवाम् आवाम्

---

२ वाच्यवत्तु सदृशं लिंगं यथोस्तौ । वाच्यमित्युच्यते भेदयं तल्लिंग भजते तुयः । विशेषणत्वमापन्नो वाच्यलिंग स उच्यते ।

३ यथा त्वं देवस्त्व देवौ त्व ब्रह्म-इत्यादौ न कोऽपि रूपभेदः ।

## यूयं वयं जसा ॥ ४ ॥

जसा सहितयोर्युष्मदस्मदोर्यूयं वयं इत्येतावादेशौ भवतः । यूयम् वयम् ॥ ४ ॥

## त्वन्मदेकत्वे ॥ ५ ॥

युष्मदस्मदोस्त्वत् मत् इत्येतावादेशौ भवतः एकत्वे गम्यमाने । एकत्वं नाम एकार्थवाचित्वं न त्वेकवचनम् । तेन त्वत्पुत्रः मत्पुत्र इत्यादौ त्वन्मदादेशौ भवत एव ॥५॥

## आऽम्स्मौ ॥ ६ ॥

युष्मदस्मदोष्टेरत्वं भवति आमि सकारे भिसि च परे । त्वाम् माम् युवाम् आवाम् । त्यदादेष्टेरत्वे कृते 'शसि' इति दीर्घत्वम् । (शसो नो वक्तव्यः) युस्मान् । अस्मान् । त्वन्मदादेशे च कृते ॥ ६ ॥

## एटाङ्योः ॥ ७ ॥

युष्मदस्मदोष्टेरेत्वं भवति टाङि इत्येतयोः परयोः । अयादेशः त्वया मया युवाभ्याम् आवाभ्याम् युस्माभिः अस्माभिः ॥ ७ ॥

## तुभ्यं मह्यं ङयो ॥ ८ ॥

ङेसहितयोर्युष्मदस्मदोस्तुभ्यं मह्यमित्येतावादेशौ भवतः । तुभ्यम् मह्यम् युवाभ्याम् आवाभ्याम् ॥ ८ ॥

## भ्यसःशभ्यम् ॥ ९ ॥

युष्मदस्मद्भ्यां परो भ्यस्शभ्यं भवति । शकारो । भकारादित्वव्यावृत्यर्थः । तेनात्वैत्वे न भवतः । युष्मभ्यम् अस्मभ्यम् ॥ ९ ॥

## ङसिभ्यसोः श्तुः ॥ १० ॥

पञ्चम्यां ङसिभ्यसोः श्तुर्भवति । शकारः सर्वादेशार्थः । उकारः सुखोच्चारणार्थः । त्वत् मत् । युवाभ्याम् आवाभ्याम् । युष्मत् अस्मत् ॥१०॥

## तव मम ङसा ॥ ११ ॥

ङसा सहितयोर्युष्मदस्मदोस्तव मम इत्येतावादेशौ भवतः । तव मम युवयोः आवयोः । सर्वादित्वात्सुट् ॥ ११ ॥

## सामाकम् ॥ ११ ॥

युष्मदस्मद्भ्यां परः साम आकम् भवति। युष्माकम् अस्माकम्। त्वयि मयि युवयोः आवयोः युष्मासु अस्मासु१ २ अथाऽनयोरादेशविशेषविधिः प्रदर्श्यते।

## युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्ते मेवान्नौवस्नसौ ॥१२॥

तत्रैकवचनेन सह ते मे भवतः द्विवचनेन सह वां नौ बहुवचनेन सह ³वस्नसौ। उक्तं च—स्वामी ते सः समायतः स्वामी मे सांप्रतं गतः। नमस्ते भगवन्भूयो देहि मे मोक्षमव्ययम् ॥ १ ॥ स्वामी वां स जहासोच्चैर्दृष्ट्वा नौ दानयाचनाम्। राजा वां दास्यते दानं ज्ञानं नौ मधुसूदनः॥२॥ देवो वामवताद्विष्णुर्नरकान्नौ जनार्दनः। स्वामी वा बलवान् राजा स्वामी नोऽसौ जनार्दनः ॥ ॥३॥ नमो वो ³ब्रह्मविज्ञेभ्यो ज्ञानं नो दीयतां

---

१ त्वां मां वातिक्रांत इति विग्रहः। अनित्यम् अत्यहम् इत्यादि।
२ विपर्ययविधिना नायं नियमो नेष्यते बुधैः। अतो विभक्तिष्व-स्मासु भवन्ति वस्नसादय इति। ३ तत्त्वलेम्य इत्यर्थः।

धनम् सानन्दान्वः प्रपश्यामः प्रपश्यामो नः सुदुःखिनः ॥१३॥

## त्वा माऽमा ॥ १४ ॥

अमासहितयोर्युस्मदस्मदोस्त्वामादेशौ भवतः । पश्यामि त्वां [1]मदालीढं पश्य मां मद-भेदकम्[2] । पश्यामि त्वां जगत्पूज्यं पश्य मां जगतांपते ! ॥ १४ ॥

## नाऽऽदौ ॥ १५ ॥

पादादौ वर्तमानयोर्युष्मदस्मदोर्नैते आदेशा भवन्ति । तव ये शत्रवो राजन् मम तेऽप्य-तिशात्रवः ॥ तव मित्राणि यानि स्युर्मम मित्राणि तान्यपि ॥१॥ रुद्रो विश्वेश्वरो देवो युष्माकं कुल-देवता । स एव नाथो भगवानस्माकं पापनाश-नः ॥२॥ पादादाविति किम् । 'पान्तु वो नरसिंहस्य नखलांगलकोटयः । हिरण्यकशिपो-र्वक्षःक्षेत्र सृक्कर्दमारुणाः ॥३॥१५॥

---

१ गर्वयुक्तम् । २ मदोत्तारकम् ।

## चादिनिश्च ॥ १६ ॥

चादिभिरपि योगे नैते आदेशा भवन्ति । तव चायं प्रभुर्विष्णुर्मम चायं तथैव च ॥ १६ ॥

इति युष्मदस्मत्प्रक्रिया ।

## अथाऽव्ययानि ।

## चादिर्निपातः ॥ १७ ॥

चादिर्गणो निपातसंज्ञको भवति । च वा ह अह एव इह एवं नूनं पृथक् विना नाना स्वस्ति अस्ति दोषा मृषा मिथ्या मिथस् वृथा अथो अथ ह्यस् श्वस् उच्चैस् नीचैस् शनैस् स्वर अन्तर् प्रातर् पुनर् भूयस् आहोस्वित् उत स्वित् सह ऋते अन्तरेण अन्तरा नमस् अलम् कृतम् । 'अमनोना' प्रतिषेध ईषत् किल खलु वै आरात् भृश यत् तत् [1]स्वराश्च [2]इत्येवमादि

[1] अ आ इति चतुर्दश । [2] आदिशब्दादध्वेषसह साकम् सार्धम सत्रा समा कच्चित् प्रायेः अथ न तु । तु नक्तम् इत्येतेषा मपि द्योतकाःकेऽपि वाचकाः केऽप्यनर्थकाः अग्निमादि केपि स्युः समूमार्थस्य साधकाः ॥

गणो निपातसंज्ञो भवति । तत्रादिर्गणो विभक्त्यर्थे निपात्यते । तस्मिन्निति तत्र । यस्मिन्निति यत्र । कस्मिन्निति कुत्र क्व कुह । अस्मिन्निति अत्र । कस्मिन् काले कदा । तस्मिन् काले तदा । यस्मिन् काले यदा । सर्वस्मिन्काले सर्वदा । एकद तेन प्रकारेण तथा । एवं यथा । केन प्रकारेण कथम् अनेन प्रकारेण इत्थम् । तस्मादिति ततः । एवंकुतः अतःइतः सार्वबिभक्तिकस्तसित्येके । पूर्वस्मिन्निति पुरस्तात् । परस्मिन्नितिपरेण । (आहिचदूरे) दक्षिणाहि वसन्ति चाण्डालाः । (किमः सामान्ये चिदादिः❀) ( सर्वविभक्त्यन्तात्किं शब्दादज्ञाता निर्धारणार्थकसामान्येऽर्थे चिच्चनौ भवतः ) कश्चित् कंचन क्वचन क्वचित् केचित् । [तदधीनकार्त्स्न्ययोर्वा सात] राजाधीनं राजसात् सर्वंभस्मकरोतीतिभस्मसात् । (ऊर्यूर्यङ्गीकरणे❀) ऊरीकृत्य उररीकृत्य(सद्यआदिःकाले निपात्यते❀) सद्यः अद्यः सपदि अधुना सांप्रतम् शीघ्रम् झटिति

पूर्वेद्युः अन्येद्युः परेद्युः उभयद्युः ॥ यर्हि तर्हि इत्यादि चादिगणः ।

## प्रादिरुपसर्गाः ॥ १८ ॥

[१]प्र परा अप सम् अनु अव निस् निर् दुस् दुर वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप अन्तर् आविर् । अयं गण उपसर्गसंज्ञकः ।१७।

## प्राग्धातोः ॥ १९ ॥

उपसर्गा धातोः प्राक् प्रयोक्तव्याः ॥१९॥

## तदव्ययम् ॥ २० ॥

तदिदं चादिरूपमव्ययसंज्ञं भवति ॥२०॥

## क्त्वाद्यन्तं च ॥ २१ ॥

क्त्वा क्यप् तुम् तुम् च्वि डा धा वतु आम् कृत्वस् शस् इत्येतदन्तं शब्दरूपमव्ययं भवति ॥२१॥

## अव्ययाद्विभक्तेर्लुक् ॥ २२ ॥

अव्ययात्परस्याविभक्तेर्लुग्भवति न तु शब्दनिर्देशे । अव्ययानां न च लिंगादिनियमः । उक्तं हि

१ प्रादिकर्मणि सामर्थ्ये दीर्घे च भृशसंभवे । वियोगशुचिशक्तेच्छा शान्तिपूजासंदर्शने ।

'सदृशं त्रिषु लिंगेषु सर्वासु च विभक्तिषु । वच-नेषु च सर्वेषु यन्नव्येति तदव्ययम्' ॥ १ ॥ उक्ता-न्यव्ययान्यलिंगानि ॥ २२ ॥ इत्यव्ययानि ॥

## अथ स्त्रीप्रत्ययाः ।

अधुना लिङ्गविशेषविजिज्ञापयिषया स्त्रीप्र-त्ययाः प्रस्तूयन्ते ।

### [1]आवतः स्त्रियाम् ॥ १ ॥

अकारान्तान्नाम्नः स्त्रियां वर्तमानादाप्प्रत्ययो भवति । जाया माया मेधा श्रद्धा धारा इत्यादि (अजादेश्चाप्वृक्तव्यः*) । अजा एडका कोकिला बाला वत्सा शूद्रा गणिका ॥ १ ॥

### [2]काप्यतः ॥ २ ॥

कापि परे पूर्वस्याकारस्य इकारो भवति । कारिका पाठिका कालिका तालिका । वष्टिभागुरिरल्लोपम-वाप्योरुपसर्गयोः । आपं चैव हलान्तानां यथा वाचा निशा दिशा ॥ १ ॥ अवगाहः वगाहः अपिधानं पिधानम् ।

---

१ एकवार गतस्याप्यस्य सूत्रस्य स्त्रीप्रत्यायार्थं पुनर्ग्रहणम् ।

२ का-अपि + इ अत इति विग्रहः ।

## ह्रस्वो वा ॥ ३ ॥

स्त्रियां कापि परे तकारादौ च पूर्वस्य ह्रस्वो वा भवति । वेणिका वेणीका । नदिका नदीका ॥ श्रेयसितरा श्रेयसीतरा । श्रेयसितमा श्रेयसीतमा ॥ नौकादौ ह्रस्वो न भवति । वाग्रहणादियं विवक्षा । निश्चयेन पतन्त्यनेकेष्वर्थेष्विति निपाता नामानेकार्[1]थत्वात् ॥ ३ ॥

## नृण ईप् ॥ ४ ॥

नकारान्तादृकारान्तादणन्ताच्च स्त्रियामीप्प्रत्ययो भवति । दण्डिनी दन्तिनी करिणी मालिनी ( ईपिराज्ञः अलोपो वक्तव्यः ❀ ) । राज्ञी शुनी कर्त्री हर्त्री औपगवी ॥ ४ ॥

## यस्य लोपः ॥ ५ ॥

इश्च अश्च यस्तस्य लोपो भवति स्वरे यकारे च परे ॥ ५ ॥

---

१ निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः । अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥

## [1]षिद्गौरादिभ्यश्च ... षट्ञित: ॥ ६ ॥

षकार टकार उकार ऋकारानुबन्धनात्स्त्रियामीप् प्रत्ययो भवति । षकराकी । टकुरुचरिः । उगोमती

## अप्ययाराान्नित्यम् ॥ ७ ॥

अप्प्रत्ययप्रत्ययसंबधिनोऽवर्णात्परस्य शतुर्नित्यं नुमीकारे ईपि च परे । ऋपचन्ती पठन्ती इत्यादि।७।

## नदादेः ॥ ८ ॥

[2]नदादेर्गणा त्स्त्रियामीप्रत्यया भवति । नदी गौरीगोमती ।

## इन्द्रादेरानीप् ॥ ९ ॥

इन्द्रादेर्गणादीनाप्रत्ययो भवति । इन्द्रवैणभव-शवरुद्रमृडहिमारण्ययवयवनमातुलाचार्यां णा-मानीप्प्रत्ययो भवति । इन्द्राणी भवानी शर्वाणी वरुणानी इत्यादि [ मातुलोपाध्यायक्षत्रियाचार्य सूर्याद्वा ❋ ] मातुलानी मातुली उपाध्यायानी

---

१ षट टश्च उश्च ऋश्च ष्ट्रृ ते इता यस्य सेष्ट्, ञित् तस्मात् ।

२ नदादिरा कृति गयो द्रष्टव्या -यथा नर्तकी तैषी पौषी मत्सी अनडुही अनड्वाही मातामही पितामही महिषी सूरी आगस्ती त्रिदर्शी ।

उपध्याया क्षत्रियाणी क्षत्रिया हिमारण्ययोराधिक्ये आनीप्रत्ययो भवति। महद्धिमं हिमानी महदरण्यम रण्यानी । आचार्यादणत्वं च । आचार्यानी आचार्या ॥ ६ ॥

## ईप् समाहारे गुणश्च ॥ १० ॥

समाहारार्थे ईप्प्रत्ययो भवति गुणश्च त्रयी पञ्चकुली ॥ १० ॥

## पुंयोगे च ॥११॥

अकारान्तात् पुंयोगे ईप्प्रत्यो भवति । शूद्रस्य स्त्री शूद्री । गणकी ॥ ११ ॥

## जातेरयोपधात् ॥ १२ ॥

जातिवाचिनोऽयकारोपधा दकारान्तात्स्त्रियामी प्रत्ययो भवति। मेषी शूकरी हंसी कुक्कुटी ब्राह्मणी अयकारोपधाग्रहणात्। क्षत्रिया वैश्या। (प्रथमवयो वाचिनोऽत ईप्वक्तव्यः❀)कुमारी किशोरी कला-भीत्यादयः। प्रथमग्रहणात्। वृद्धा स्थविरा इत्यादौ न इप्। अद् ग्रहणात् शिशुः ॥ १२ ॥

---

१ आकृतिग्रहणाज्जातिर्लिंगानां च न सर्वभाक्। सकृदा-ख्यातनिर्ग्राह्या गोत्रं च चरणैःसह ।

## स्वांगाद्वा ॥ १३ ॥

[1]स्वांगवाचिनोर्वा[2] स्त्रियामीप्प्रत्ययो भवति। सुमुखी मृगाक्षी तन्वंगी। वाग्रहणात् पद्मवदना कमलनयना इत्यादौ ईप् न भवति। [ कृदिकारादक्तेरीप् वा वक्तव्यः ❀ ]

अंगुलिः अंगुली। धूलिःधूली। आजिःआजी। अक्तेरिति विशेषणात् कृतिः भूतिः ॥१३॥

## ऐ च मन्वादेः ॥ १४ ॥

[3]मन्वादिगणात्स्त्रियामीप्प्रत्ययो भवति ऐकारादेशश्च मनायी चकारात 'मनोरी वा' मनावी। मनुः। वृषाकपायी ॥ १४ ॥

## पत्न्यादयः ॥ १५ ॥

पत्न्यादय ईप्प्रत्ययान्ताः निपातात्साधवः। समानैकवीरपिण्डपुत्रभ्रातृदासेभ्यो बहुव्रीहौ पत्युनाद

१ अद्रावं मूर्तिमत्स्वांगं प्राणिस्थमविकारजम। अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथा युतम्। २-अत्र वा निषेधार्थी वनुविकल्पार्थः। ३-आदिशब्दादग्नेर्भार्या [ स्वाधा ] अग्नायी कुत्सितस्य क्रिया कुत्सितायी पूतक्रतोर्भार्या: पूतक्रतायी, अन्यथा पूताः क्रतवो यस्य स पूतक्रतुः। श्रीगौर्यौं।

शई्प्त्र ❀)[१]सपत्नी। एकपत्नी। वीरपत्नीपिराडपत्नी इत्यादि। अन्तः पत्नीपातिपत्नीसखीअशिश्वीअर्ध जरतीयुवती। प्राची प्रतीची उदीची समीची। दार शब्दोनित्यं बहुवचनान्तः पुल्लिंगः। दाराः दारान् दारैः दारेभ्यः दारेभ्यः दाराणाम् दारेषु। हे दाराः।

## वोर्गुणात् ॥ १६ ॥

उकारान्ताद् गुणवाचिनोवास्त्रियामीप् प्रययोभ वति।पट्वीपटुः।मृद्वीमृदुः।तन्वीतनुः ऋज्वीऋजुः।

## उत ऊः ॥ १७ ॥

उकारान्तान्मनुष्यजातेः स्त्रियामूप्रत्ययो वा भवति। पंगूःपंगुः। वामोरूः वामोरुः ॥ १७ ॥

## यूनस्तिः ॥ १८ ॥

युवनशब्दात् स्त्रियां तिप्रत्ययो भवति। नाम्नो नो लोपश्चुधौ युवतिः। एभ्यो नामत्वात्स्यादयः। आब- आबन्तात् आपः। इबन्तात्, 'हसेपः सेर्लोपः' इति सेर्लोपः पूर्ववत् प्रक्रिया ॥ १८ ॥

॥ इति स्त्रीप्रत्ययाः ॥

---

१ समान [एकः] पतिर्यस्या सा। २ सत्वे निविशतेऽपैतिपृथग् जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुणः।

# अथ कारकाणि ।

## तत्रादौ विभक्त्यर्थौ निरूप्यते ।

## लिङ्गार्थे प्रथमा ॥ १ ॥

धातुप्रत्ययातिरिक्तमर्थवच्छब्दरूपं लिङ्गं तस्यै-वार्थे सन्मात्रे प्रथमाविभक्तिर्भवति । लिङ्गादयोऽपि प्रथमार्था इति केचित् । [१]सत्सद्ब्रह्म ॥ १ ॥

## अन्योक्ते प्रथमा ॥ २ ॥

रविरिव राजते राजा । रोषात्कुमारी रोरूयते । बोभुज्यते भुवं भूपालः । प्रागास्तां रामलक्ष्मणौ । [प्रथमान्तो यदा कर्ता कर्मणि द्वितीया तदा । यदा कर्ता तृतीयान्तः कर्मणि प्रथमा तदा ॥ १ ॥) मनसि वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवनमुपकारश्रे-णिभिः प्रीणयन्तः । परगुणपरमाणून्पर्वतीकृत्य नित्यं निजगुणविकसन्तः सन्ति सन्तः कियन्तः ॥ २ ॥ कुमारीः शेरते स्वैरं रोरूयन्ते च नारकाः ॥ येगीयन्ते च गीतज्ञा मेम्रियन्ते रुजार्दिताः ॥ ३ ॥

---

१ तदिति ज्ञान दृष्टि गोचर-सदिति वर्तमानमविनाशी प्रधानं वा-एवं विधं ब्रह्म-परब्रह्म वर्तते ।

## आमन्त्रणे च ॥ ३ ॥

आमंत्रणेमभिमुखीकरणे प्रथमा विभक्तिर्भवति १ मां समुद्धर गोविंद प्रसीद परमेश्वर। कुमारौ स्वैरमासाथां क्षमध्वं भो तपस्विनः॥ ३ ॥

## भोस ॥ ४ ॥

भोस् भगोस् अघोस् एतेशब्दानिपात्यंतेधिविषये। क्षमस्व भो दुराराध्यभगोस्तुभ्यं नमःसदा । अघोस्व भोमहापाज्ञघातयाघाःस्वघस्मरम्॥४॥इतिप्रथमा।

## शेषाः ॥ ५ ॥

कार्यैकर्तृ साधनयोर्दानपात्रे विश्लेषाधौ सम्बन्धाधारभावयोः शेषाविभक्तयो द्वितीयाद्या एष्वर्थेषु भवन्ति । "कर्ता कर्म च करणं च संप्रदानं तथैव च । अपादानाधिकरणमित्याहुः कारकाणि षट्" ॥ ६ ॥ ( कार्ये कर्मकारके उत्पाद्ये आप्ये संस्कार्ये विकार्ये च द्वितीया विभक्तिर्भवति ) कटं करोति कारुको रूपं पश्यति चाक्षुषः । राज्यं प्राप्नोति धर्मिष्ठः सोमं सुनोति सोमपाः ॥७॥

---

१ अत्र गोविंद परमेश्वर प्रथमैकवचनान्तम्–कुमारौ प्रथमा द्विवचनम्-तपस्विनः प्रथमा बहुवचनान्तम् ।

अभिसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ ८ ॥
अभितो ग्रामं नदी वहति । सर्वतोग्रामं वनानि सन्ति धिक् देवदत्तम् । उपर्युपरि ग्रामं मेघाः पतन्ति । अधोऽधो ग्रामं शलभाः पतन्ति । अध्यधि ग्रामं मृगाश्चरन्ति । समया निकषा हा प्रतियोगेऽपि । समया ग्रामं तीर्थम् । निकषा ग्रामम् अनुग्रामम् ॥ ५॥

## कालाध्वनोर्नैरन्तर्ये ॥ ६ ॥

कालाध्वनोर्नैरन्तर्ये द्वितीया विभक्तिर्भवति । मासमधीते । क्रोशं पर्वतः । नैरन्तर्याभावे मासस्य द्विरधीते क्रोशस्यैकदेशे पर्वतः ॥ ६ ॥
॥ इति द्वितीया ॥ २ ॥

## कर्त्तरि प्रधाने क्रियाश्रये साधने च ।

क्रियासिद्ध्युपकारके करणेऽर्थे तृतीयाविभक्तिर्भवति । भिन्नः शरेण रामेण रावणो लोकरावणः । कराग्रेण विदीर्णोऽपि वानरैर्युध्यते पुनः ॥ ६ ॥ ७ ॥ इति तृतीया ॥ ३ ॥

---

१ धिक् तां च तं च मदनं च इमां च मां च ॥

## दानपात्रे चतुर्थी ॥ ८ ॥

दानपात्रे संप्रदानकारके चतुर्थी । सम्यक् श्रेयोबुद्ध्या यस्मै प्रदीयते तत् संप्रदानम् । ददाति दण्डं पुरुषो महीपतेर्न चातिभक्त्या न च दानकाम्यया यद्दीयते दानतया सुपात्रे तत्सं-प्रदानं कथितं मुनीन्द्रैः ॥ १० ॥ वेदविदे गां ददाति । अन्यत्र राज्ञो दण्डं ददाति । रजकस्य वस्त्रं ददाति ॥ ८ ॥ इति चतुर्थी ॥ ४ ॥

## विश्लेषाऽवधौ पंचमी ॥ ९ ॥

विश्लेषो विभागस्तत्र योऽवधिश्चलतयाऽचलतया वा विवक्षितस्तत्रापादाने पंचमी । धावताऽश्वाद्-पतत् भूभृतोऽवतरति गंगा ॥९॥ इति पंचमी ॥५॥

## सम्बन्धे षष्ठी ॥ १० ॥

सम्बन्धिनोमध्ये योऽवधानस्तत्र षष्ठी । भेद्यभे-दकयोःश्लिष्टःसंबंधोऽन्योन्यमिष्यते । द्विष्ठो यद्यपि संबन्धःषष्ठ्युत्पत्तिस्तुभेदकात् ॥११॥ भेद्यंविशेष्य मित्याहुर्भेदकं च विशेषणम् । प्रधानं च विशेष्यं स्यादप्रधानं विशेषणम् ॥ १२ ॥ एकक्रियातः

परस्परापेक्षारूपःसंबन्धः । राज्ञः स पुरुषो ज्ञेयः पित्रोरेतत्प्रपूजनम् । गुरूणां वचनं पथ्यं कवीनां रसवद्वचः ॥ १३ ॥ १० ॥ इति षष्ठी ॥ ६ ॥

## आधारे सप्तमी ॥ ११ ॥

आधारेऽधिकरणं तत् षड्विधम् [1]औपश्लेषिकम् १ सामीप्यकम् २ अभिव्यापकम् ३ वैषयिकम् ४ नैमित्तिकम् ५ औपचारिकञ्चेति ६ । कटे शेते कुमारोऽसौ वटेगावःसुशेरते । तिलेषु विद्यते तैलं हृदिब्रह्मामृतं परम् ॥ युद्धे संनह्यते धीरोऽङ्गुल्यग्रे करिणांशतम् ॥

## भावे सप्तमी ॥ १२ ॥

प्रसिद्धक्रियया ऽप्रसिद्धक्रियालक्षणं बोधनंभावस्तत्र सप्तमी । वर्षतिदेवेचौर आयातः । पतत्यंशुमालिनि पतितोऽरातिः । कालेशरदि पुष्यति सप्तच्छदाः १२

अथोपपदभक्त्यर्थो निरूप्यते ॥

## विनासहनमस्कृते निर्धारणे स्वाम्यादिभिश्च ॥ १३ ॥

एतैरपि योगे द्वितीयाद्या विभक्तयो भवंति । विना पापं सर्वं फलति । विना वातं विना वर्षं

---

१-उप समीपेन श्लेषणं संघट्टनमुपश्लेषः । यथा शेते शते ।

विद्युतः पतनं विना । विना हस्तिकृतं दोषं केनेमौ पतितौ द्रुमौ ॥ अन्तरेणाक्षिणी किं जीवितेन । अंतरा त्वां मां हरिरित्यादिपदंतद्ग्राह्यम् ॥ १३ ॥

## सहादियोगे तृतीयाऽप्रधाने ॥ १४ ॥

सह सदृशं साकं सार्धं समं योगेऽपि तृतीयाविभक्तिर्भवति ॥ सह शिष्येणागतो गुरुः । सदृशश्चैत्रो मैत्रेण । साकं नयनाभ्यां श्वक्ष्णा दन्ताः । सार्धं धनिनाधूतः साधुः समंचन्द्रेणादितो गुरुः ॥ १४ ॥

## नमः स्वस्तिस्वाहास्वधाऽलंवषड्योगे चतुर्थी ॥ १५ ॥

नमो नारायणाय । स्वस्ति राज्ञे । सोमाय स्वाहा । पितृभ्यः स्वधा । अलं मल्लो मल्लाय वषडिन्द्राय ॥ १५ ॥

## ऋतआदि[1]योगे पञ्चमी ॥ १६ ॥

ऋते ज्ञानान्न मुक्तिः । अन्यो गृहाद्विहारः । आराद्वनात् । इतरा ग्रामात् ॥ १६ ॥

---

१ ऋते अन्यः आरात् इतरः अञ्चूत्तरपददिग्वाचकः शब्दः आहि आ च एत ऋते आदयः ।

## ऋते योगे द्वितीया च ॥ १७ ॥

ज्ञानमृते । चकारात् विनादियोगेऽपि तृतीयाप-ञ्चम्यौस्तः । ज्ञानेन विना । ज्ञानाद् विना ॥१७॥

## दिग्योगे पञ्चमी ॥ १८ ॥

पूर्वो ग्रीष्माद्वसन्तः ॥ १८ ॥

## निर्धारणे षष्ठीसप्तम्यौ ॥१९॥

निर्धारणं द्रव्यगुणजातिभिः समुदायापृथक्क-रणं तत्र षष्ठी सप्तम्यौ भवतः । क्रियापराणां भगवदाराधकः श्रेष्ठः ॥ क्रियापरेषु वा । गवां कृष्णा गौः सम्पन्नक्षीरा गोषु वा । एतेषां क्षत्रियः शूरतमः एतेषु वा ॥ १९ ॥

## स्वाम्यादिभिश्च ॥ २० ॥

स्वाम्यादिभिर्योगे षष्ठीसप्तम्यौ भवतः । गवां स्वामी गोषु स्वामी । गवामधिपतिः । गोष्वधिपतिः ।२०।

## कर्तृकार्ययोः क्तादौ कृति षष्ठी ॥२१॥

कर्तरि कार्ये च षष्ठीविभक्तिर्भवति क्तादिव-

---

१ अत्र, द्विषः शत्रुर्वा ॥ सुरं चाद्विषम् ॥ उभय प्राप्तौ कर्मणि चित्रं गवां दोहोऽगोपेन इति संग्रहोऽपि ॥

जितकृदन्ते शब्दे प्रयुज्यमाने । व्यासस्य कृतिः । भारतस्य श्रवणम् ॥ १२ ॥

## स्मरतौ च कार्ये ॥ २२ ॥

स्मरतौ धातौ प्रयुज्यमाने कार्ये कर्मणि षष्ठी । मातुः स्मरति । मातरं स्मरति ( [1]हेतौ तृतीया पंचमी च वक्तव्या❀ ] अनित्यः शब्दः कृतकत्वेन कृतकत्वाद्वा ॥ २२ ॥

## भयहेतौ पञ्चमी ॥२३॥

चोराद्बिभेति । व्याघ्रात्त्रस्यति । विद्युत्पाताच्छंकितः ।

## षष्ठी हेतुप्रयोगे च ॥ २४ ॥

कस्य हेतोरियं कन्या । अन्नस्य हेतोर्वसति ॥२४॥

## इत्थंभावे तृतीया ॥२५॥

शिष्यं पुत्रेण पश्यति । संसारमसारेण पश्यति । पुष्करणीं नद्या पश्यति ॥ २५ ॥

---

१-हेतुशब्दे प्रयुज्यमाने चकारात्सर्वादेः हेतुप्रयोगे सर्वा विभक्तयो भवन्ति । केन हेतुना । कस्य हेतोः निमित्तकारणे हेत्वर्थ प्रयोगेऽपि सर्वा विभक्तयो भवन्ति । को हेतोः, कं हेतुं केन हेतुना । कस्मैहेतवे । कस्मात् कस्य च हेतोः । कस्मिन्हेतौ किंचित्प्रकारं प्राप्त इत्थंभावोऽन्यस्यान्यतापचारेण वर्तमानत्वं वा ।

## येनांगविकारः ॥२६॥

येनांगेनरविकृतेनांगिनोऽगविकारो लक्ष्यते तस्मा-दंगात् तृतीयाविभक्तिर्भवति। देवदत्तोऽक्ष्णा काणः, पादेन कुब्जः। कर्णेन बधिरः, शिरसा खल्वाटः ॥

## जनिकर्तुः प्रकृतिः ॥ २७ ॥

जायमानस्य कार्यस्योपादानमपादानसंज्ञं भवति तत्रापादाने पञ्चमी। [1]यस्मात्प्रजाः प्रजायन्त तद् ब्रह्मेति विदुर्बुधाः ॥ २७ ॥

## आङादियोगे पञ्चमी ॥ २८ ॥

आपाटलिपुत्राद्वृष्टो देवः २८ ॥

## तादर्थ्ये चतुर्थी ॥ २९ ॥

संयमाय श्रुतं धत्ते नरो धर्माय संयमम्। धर्मं मोक्षाय मेधावी धनं दानाय भुक्तये ॥ १६ ॥ २९ ॥

## क्रुध्यादियोगे चतुर्थी ॥ ३० ॥

क्रूराय क्रुध्यति। मित्राय द्रुह्यति। गुणावते असू

---

१ अत्र प्रजायन्त इति जनिधातुः क्रियापदम्। प्रजा इति जनि कर्तुः क्रियापदम्। जायमानकार्यत्वात्तस्य प्रकृतिशब्दब्द-निर्दिष्टो ब्रह्मा। अतः पञ्चमी। आङ्मर्यादाभिविध्योः।

याति ॥ ल्यब्लोपे पञ्चमी च वक्तव्या ※) हर्म्यात् प्रेक्षते॥ [निमित्तात्कर्मयोगे सप्तमी च वक्तव्या ※) । चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ ३० ॥

## विषये च ॥ ३१ ॥

तर्के चतुरः ॥ ३१ ॥

## षष्ठीसप्तम्यौ चानादरे ॥ ३२ ॥

बहूनां क्रोशतां गतश्चौरः । बहुष्वसाधुषु निवारयत्स्वपि स्वयमार्यो याति साधुमार्गेण । बहुषु साधुषु निवारयत्स्वपि स्वयमनार्यो यात्यसाधु मार्गेण । मातापित्रोरुदतोः प्रव्रजति पुत्रः ॥ ३२ ॥

## अनभिहिते प्रथमा ॥ ३३ ॥

यदिदं कार्यं स्यादन्येनाख्यातेन कृताचोक्तं भवति तदा प्रथमा प्रयोक्तव्या । घटः क्रियते । पटः कार्यः ।

## छन्दसि स्यादिः सर्वत्र ॥ ३४ ॥

दध्ना जुहोति । पुनन्तु ब्रह्मणस्पतिः । ब्रजतीर्विरेजु ॥

॥ इति कारकप्रक्रिया समाप्ता ॥

# अथ समासप्रकरणम् ।

अथार्थवद्विभक्तिविशिष्टानां
पदानां समासो निरूप्यते ।

**समासश्चान्वये नाम्नाम् ॥ १ ॥**

नाम्नामन्वय[1]योग्यत्वे सत्येव समासो भवति । च शब्दात्तद्धितोऽपि भवति । ततो भार्या पुरुषस्येत्यादौ न भवति परस्परमसंबन्धात् । स च षड् विधः । अव्ययीभावस्तत्पुरुषो द्वन्द्वो बहुव्रीहिः कर्मधारयो द्विगुश्चेति तत्र पूर्वपदप्रधानोऽव्ययी भावः । द्विगुतत्पुरुषौ परपदप्रधानौ । द्वन्द्वकर्म धारयौ चोभयपदप्रधानौ । बहुव्रीहिरन्यपद प्रधानः । तस्य क्रियाभिसम्बन्धादुभयपदप्रधानो बलवान् । ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वं च समासप्रयोजनम् । अधि स्त्री इति स्थितेस्त्रीशब्दाद् द्वितीयैकवचने अम् । स्त्रीभुवोः स्त्रियमधि कृत्य भवतीति विग्रहे अन्वययोग्यर्थसमर्थकः । पदसमुदायो विग्रहो वाक्यमिति यावत् । स्वप-

---

१ विभक्तिर्लुप्यते यत्र तदर्थश्च प्रतीयते । एकपद्यपदानां च समासोऽभिधीयते । समसनमनेकेषां पदानामेकं वा समास इति-

दैरन्यपदैर्वा विविच्य कथनं विग्रहः। ( कृते समासे अव्ययस्य पर्वनिपातो वक्तव्यः ※) ॥१॥

## पूर्वेऽव्ययेऽव्ययीभावः ॥ २ ॥

अव्ययपूर्वपदे सति योऽन्वयःसोऽव्ययी भावसंज्ञकः समासे भवति। इति समाससंज्ञायां सत्याम् ॥२॥

## समासप्रत्यययोर्लुक् ॥ ३ ॥

समासे वर्तमानाया विभक्तेः प्रत्यये च परे लुग् भवति। इत्यमो लुक्। निमित्ताभावे नैमित्तिक स्याप्यभावः। नामज्ञायां स्यादिविभक्तिः। अधि स्त्री सि इति स्थिते ॥ ३ ॥

## स नपुंसकम् ॥ ४ ॥

सोऽव्ययीभावो नपुंसकलिंगो भवति। नपुंसक त्वाद्ध्रस्वत्वम्। अधिस्त्रि ॥ ४ ॥

## अव्ययीभावात् ॥ ५ ॥

अव्ययीभावात्परस्या विभक्तेर्लुग् भवति। अधिस्त्रि गृहकार्यम्। रायमतिक्रान्तमतिरि कुलम्। नावमतिक्रांतमतिनु जलम् ॥ ( ह्रस्वादेशे सन्ध्यक्षराणामिकारोकारौ च वक्तव्यौ ※ ) योग्यतावीप्सा

पदार्थनीतवृत्तिसादृश्ये तु यथार्थाः । रूपस्य योग्यं अनुरूपम् । पदार्थान् व्याप्तुमिच्छा वीप्सा । विष्णु विष्णुं प्रति प्रतिविष्णु । सादृश्ये तु यथा हरिस्तथा हरः ॥ ५ ॥

## यथाऽसादृश्ये ॥ ६ ॥

यथाशब्दोऽसादृश्ये वर्त्तमानः समस्यते । शक्तिमनतिक्रम्य करोतीति यथाशक्ति ॥ ६ ॥

## अतोऽमनतः ॥ ७ ॥

अकारान्तादव्ययीभावात्परस्याविभक्तेरम् भवति अतं वर्जयित्वा । कुम्भस्य समीपे उपकुम्भं वर्त्तते । उपकुम्भं पश्य । अनत इति विशेषणपञ्चम्या अम् न भवति ॥ ७ ॥

## वा टाङ्योः ॥ ८ ॥

अकारान्तादव्ययीभावात् टा ङि इत्येतयोर्वा अम् भवति । उपकुम्भेन कृतं उपकुम्भकृतम् । उपकुम्भं निधेहि उपकुम्भे निधेहि । देहि उपकुम्भं निधेहि । उकुम्भादानय ॥ ८ ॥

## अवधारणार्थे यावति च ॥ ९ ॥

अवधारणार्थे यावच्छब्दे पूर्वपदे सति अव्ययीभा-

वसंज्ञकः समासो भवति । यावन्त्यमत्राणि सम्भवन्ति तावंतो ब्राह्मणान्निमन्त्रयस्वेति यावदमत्रम् । मक्षिकाणामभावो निर्मक्षिकं वर्तते ॥६॥

इत्यव्ययीभावः ॥

## अथादौ तत्पुरुषः ॥ १ ॥

द्वितीयाद्यन्ते पूर्वपदे सति योऽन्वयः तत्पुरुषसंज्ञकः समासो भवति । ग्रामं प्राप्तो ग्रामप्राप्तः ॥ दात्रेण छिन्नं दात्रच्छिन्नम् । यूपाय दारु यूपदारु । वृकेभ्यो भयं वृकभयम् । राज्ञः पुरुषो राजपुरुषः । अक्षेषु शौण्डः अक्षशौण्डः ॥ (क्वचिदमाद्यन्तस्य परत्वम्) आहिताग्निः । पूर्वं भूतो भूतपूर्वः । (समासे क्वचिदैकपद्यं णत्वहेतुः) शराणां वनं शरवणम् । आम्राणां वनं आम्र वणम् त्रिणयनः (पानस्य वा) सुरापानं सुरापाणम् ।

## नञि ॥ २ ॥

नञि पूर्वपदे सति योऽन्वयः स तत्पुरुषसंज्ञकः समासे भवति । ब्राह्मणोऽब्राह्मणः ॥ १ ॥

## नञ् ॥ ३ ॥

समासे सति नञोऽकारादेशो भवति ।

नाकादिवर्जम् । नाकाः । नपुंसकम् ॥ ३ ॥

## अन् स्वरे ॥ ४ ॥

समासे सति नञो ऽनादेशो भवति स्वरेपरे । अश्वादन्योऽनश्वः । धर्माद्विरुद्धोऽधर्मः । ग्रहणाभावोऽग्रहणमित्यादि । तदन्यतद्विरुद्ध तदभावेषु नञ्प्रवर्तते ॥ ४ ॥

इति तत्पुरुषः ।

## चार्थे द्वन्द्वः ॥ १ ॥

[1]समुच्चायान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । [2]तत्रेश्वरं गुरुं च भजस्वेति प्रत्येकमेकक्रियासम्बन्धे समुच्चये समासो नास्ति । बटो[3] भिक्षामठ गां चानयेति क्रमेण क्रियाद्वयसंबन्धं अन्वाचये च समासो नास्ति परस्परसंबन्धात् । इतरेतरयोगे समाहारे च चार्थे द्वन्द्वसमासो भवति । ( द्वन्द्वेऽल्पस्वरप्रधाने इकारोकारान्तानां पूर्वं

---

१ समुच्चयः-अन्वाचयः इतरेतर योगः समाहारः इति चत्वारश्चार्थाः । तत्र कर्म द्वयस्यैक क्रिया निष्ठा च समुच्चयः १ कर्मद्वयेऽपि प्रत्येकं क्रिया द्वयेन सम्बन्धोऽन्वाचयः २ पदद्वयेन सम्बन्ध इतरेतरयोगः ३ बहूनां पदानां समुदायः समाहारः ॥

२ अत्र कर्मद्वयस्यैक क्रिया निष्ठत्वम् समुच्चय ।

३ अत्राटन क्रियया भिक्षाकर्म आनयक्रियाया गौ कर्म एकस्व वरो-आष्टनेन अटनेन क्रियाद्वयेन सम्बन्धोऽन्ता च य प- त्याद्ययोः समासा नास्ति ।

निपातो वक्तव्यः❀ ) अग्निश्च मारुतश्च अग्नि-मारुतौ। पटुश्च गुप्तश्च पटुगुप्तौ। ( उक्तार्थानाम-प्रयोगः ❀) स्त्री च पुरुषश्च स्त्री पुरुषौ । भोक्ता च भोग्यश्च भोक्तृभोग्यौ। धवश्च खादिरश्च ध व खदिरौ। (देवताद्वन्द्वे पूर्वपदस्य दीर्घो वक्तव्यः❀) इन्द्रश्च बृहस्पतिश्च इन्द्राबृहस्पती (अग्न्यादेः सोमा-दीनां षत्वं वक्तव्यम् ❀) इतरेतरयोगे द्विवचनम् । अग्निषोमौ । (एकवद्भावो वा [1]समाहारे वक्त-व्यः ❀) शशाश्च कुशाश्च पलाशाश्च शशकुश-पलाशाः तेषां समाहारे शशकुशपलाशम् ॥ १ ॥

## स नपुंसकम्[1] ॥ २ ॥

यस्यैकवद्भावः स नपुंसके भवति । ( अन्या-दीनां विभक्तिलोपे कृतपूर्वस्य समासो वक्तव्यः ) अन्यश्च अन्यश्च अन्योऽन्यम्। परश्च परश्च परस्परम् ॥ २ ॥ ❀ इति द्वन्द्वः ❀

## एकत्वे द्विगुद्वन्द्वौ ॥ १ ॥

एकत्वेवर्तमानाद्द्विगुद्वन्द्वौ नपुंसकलिंगो भवतः १

---

१ यत्र द्वित्वं बहुत्वं च स द्वन्द्वमि तरेतरः। समाहारः स विज्ञेयो यत्रैकत्वं नपुंसकम्।

## संख्यापूर्वो द्विगुः ॥ २ ॥

संख्यापूर्वः समासो द्विगुर्निगद्यते ॥ २ ॥

## समाहारेऽतदीप् द्विगुः ॥३॥

समाहारेऽर्थे द्विगुः समासो भवति ततोऽकारान्ता दीप्प्रत्ययो भवति । दशानां ग्रामाणां समाहारो दशग्रामी । अकारान्तो द्विगुःस्त्रियामिष्यते । पञ्च अग्नयःसमाहृता इति पञ्चाऽग्नि । पंचानां गवां समाहारः पंचगुः । नपुंसकत्वाद्ध्रस्वत्वम् । त्रिफलेति रूढिः ( पात्रादीनामाप्यातिषेधा वक्तव्यः ❋ ) पंचपात्रम् । त्रिभुवनम ॥३॥ इति द्विगुः ॥

## बहुव्रीहिरन्यार्थे ॥ १ ॥

अन्यपदार्थे प्रधानो यः समासःस बहुव्रीहिसंज्ञकः । समासो भवति । बहुधनं यस्य स बहुधनः अस्ति धनं यस्य सोऽस्तिधनः । तस्य प्रधानस्यैकदेसो विशेषणतया यत्र ज्ञायते स तद्गुणसंविज्ञानो बहुव्रीहिः । यथा लम्बौ कर्णौ यस्य स लम्बकर्णः । ( बहुव्रीहौ विशेषणसप्तम्यन्तयोः पूर्वनिपातो वक्तव्यः ) । कंठ कालो यस्यासौ कण्ठकालः धनं करे यस्य स करधनः ॥ १ ॥

## नेन्द्वादिभ्यः ॥ २ ॥

सप्तम्यन्तस्य पूर्वनिपातो न भवति । इन्दु शेखरः चक्रपाणिः पद्मनाभः । कपिध्वजः ॥ २ ॥

## प्रजामेधयोरसुक् ॥ ३ ॥

सुप्रजाः । सुमेधाः । दुर्मेधाःअत्वसोः सौ ॥ ३ ॥

## धर्मादन् ॥ ४ ॥

सुष्टु धर्मो यस्य सः सुधर्मा ॥ ४ ॥

## अन्यार्थे ॥ ५ ॥

स्त्री लिंगस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति ॥५॥

## पुंवद्वा ॥ ६ ॥

समासे सति समानाधिकरणे पूर्वस्य स्त्रीलिंग-शब्दस्य पुंवद्भावा वा भवति । पुंवद्भावादीपो निवृत्तिः । रूपवती भार्या यस्य स रूपवद्भार्यः। वाग्रहणम् कल्याणीप्रिय इत्यादौ न भवति ॥ ६ ॥

## गोः ॥ ७ ॥

गोशब्दस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति । पञ्च गावो यस्य स पञ्चगुः (सङ्ख्यासु व्याघ्रादिपूर्वस्य

पादशब्दस्याल्लोपो वक्तव्यः❀) सहस्रं पादा यस्य स सहस्र पात्। शोभनौ पादौ यस्य स सुपात्। व्याघ्रस्य पादाविव पादौ यस्य स व्याघ्रपात् द्वौ पादौ यस्य स द्विपात् द्विपादौ द्विपादः। द्विपादं द्विपादौ ( शसादौ स्वरे परे पदादेशश्च वक्तव्यः ) द्विपदः द्विपदा द्विपाद्भ्याम् द्विपाद्भिरित्यादि ॥ ७ ॥

## टाडकाः ॥ ८ ॥

समासे सति ट अ ड क इत्येते प्रत्यया भवन्ति । अचिन्त्यो महिमा यस्यसावचिन्त्यमहिमः। 'टकारस्तत्पुरुषे स्यादकारो द्वन्द्वे एव च। डकारश्च बहुव्रीहौ ककारोऽनियमो मतः' ॥८॥

## नो वा ॥ ९ ॥

नान्तस्य पदस्य टेर्लोपो वा भवति यकारे स्वरे च परे । वाग्रहणात्क्वचिन्न भवति किन्तु उपधालोपश्च। अह्नो मध्ये मध्याह्नः। कवीनां राजा कविराजः। टकारानुबन्ध ईबर्थः कविराजी। राज्ञां पूः राजपुरम्। वाक् च मनश्च वाङ्मनसम्।

दक्षिणस्यां दिशि पन्था दक्षिणपथः । अहश्च रात्रिश्च अहोरात्रम् । द्वौ च त्रयश्च परिमाणम् येषान्ते द्वित्राः । बहवो राजानो यस्यां नगर्यां सा बहुराजा नगरी । अत्र टिलोपे कृते आबतः स्त्रियाम् इत्याप् । बहवः कर्त्तारो यस्य स बहुकर्तृकः ॥९॥

## कर्मधारयस्यस्तुल्यार्थे ॥ १० ॥

पदद्वये तुल्यार्थे एकार्थनिष्ठत्वे सति कर्मधारयः । रक्ता च लता च रक्तलता । पुमांश्चासौ कोकिलश्च पुंस्कोकिलः [ पुंसः खपे संयोगगान्तलोपो वक्तव्यः*] ॥ १० ॥

## नाम्नाश्च कृता समासः ॥ ११ ॥

प्रादेरुपसर्गस्य नाम्नाश्च कृदन्तेन समासस्तत्पुरुषो भवति । प्रकृष्टो वादःप्रवादः । कुम्भं करोतीति कुम्भकारः ॥ ११ ॥

## सहादेः सादिः ॥ १२ ॥

समासे सति सहादीनां सादिर्भवति । पुत्रेण सह वर्तते इति सपुत्रः । सहसमतिरसां सध्रिसमितिरयः । सह अञ्चतीति सध्र्यङ् । समम् अञ्चतीति सम्यङ् । तिरः अञ्चतीति तिर्यङ् ॥

## कोःकद्वादिः ॥ १३ ॥

कुशब्दस्य कुत्सितेषदर्थयोस्तत्पुरुषे कत्कवका आदेशा भवन्ति । कुत्सितं अन्नं कदन्नम् । ईषदर्थे कोः क वककदुष्णे । ईषदुष्णं कवोष्णं कोष्णम् कदुष्णम् । कालवणम् । कोर्मन्दादेशश्च । मन्दोष्णम् । रथवदयोश्च । कद्रथः । कद्वदः ॥ १३॥

## पुरुषे वा ॥ १४ ॥

कुपुरुषः कापुरुषः ॥ १४ ॥

## पथ्याक्षयोः ॥ १५ ॥

कोःकादेशःस्यात् । कुपथःकापथः । कुअक्षःकाक्षः ।

## ईषदर्थे च ॥ १६ ॥

ईषज्जलं काजलम् । षड्भिरधिका दश षोडश । षट प्रकारः । षोढा षड्धा । संख्यायाः प्रकारे धा धस्य ढः (षष उत्वंदतदंशधासूत्तरपदादेः ष्टुत्वं च भवतीति वक्तव्यम्*) षट्दन्ता यस्य स षोडन् । षष् दन्त इति स्थिते । दन्तस्य दत् । ऋइत् । षाषःषस्य

उः दस्य डः। ञितोनुम्। षोडन्। (बृहच्छब्दस्य सुडागमः तलोपश्च*) बृहता पतिः बृहस्पतिः॥१६॥

## महच्छब्दस्य टेराकारः समानाधिकरणे ॥ १७ ॥

महादेवः महेश्वरः। द्यौश्च भूमिश्च द्यावाभूमी द्यौशब्दस्य द्यावादेशः जायायाः जम्भावो दम्भावश्च निपात्यते। दम्पती जंपती। क्वचिज्जायापती आकृतगणोऽयम् ॥ इति कर्मधारयः ॥१७॥

## अलुक् क्वचित् ॥ १८ ॥

क्वचित्समासे कृदन्ते तद्धितेऽपि विभक्तेरलुग्भवति कृच्छ्रान्मुक्तः। अप्सु योनिरस्येत्यप्सुयोनिः। उरसि लोम यस्यासौ उरसिलोमा। हृदि स्पृशतीति हृदिस्पृक्। कण्ठे कालो यस्यासौ कण्ठेकालः वाचोयुक्तिः। दिशो दण्डः। पश्यतोहारः। वनेचरः। खेचरः।(समानाधिकरणे शाकपार्थिवादीनां मध्यमपदलोपो वा वक्तव्यः)। शाकः प्रियो यस्य सः

शाकप्रियः । शाकप्रियश्चासौ पार्थिवश्च शाकपार्थिवः देवपूजको ब्राह्मणा देवब्राह्मणः ॥ १८ ॥

## आदेश्च द्वन्द्वे ॥ १९ ॥

द्वन्द्वे समासे पूर्वपदस्य लोपो भवति । चकारग्रहणात् विकल्पेन । माता च पिता च पितरौ । शिष्यमाणो लुप्यमानार्थ । भिधायी । श्वश्रूश्च श्वशुरश्च श्वशुरौ । दुहिता च पुत्रश्च पुत्रौ ॥१९॥

## ऋतां द्वन्द्वे ॥ २० ॥

द्वन्द्वे समासे पूर्वपदस्य ऋकारस्य वा आकारो भवति । माता च पिता च मातापितरौ ॥२०॥

## द्वन्देसर्व्वादित्वं वा ॥ २१ ॥

द्वन्द्वे समासे सर्वादित्वं वा भवति । वर्णाश्च आश्रमाश्च इतरे च वर्णाश्रमेतराः ॥ (वैयधिकरण्ये बहुव्रीहौ मध्यमपदलोपोऽस्ते वक्तव्यः*) । कुमुदस्य [1]गन्ध इव गन्धो यस्य सः कुमुदगन्धिः ॥ २१ ॥

---

१ अत्र चकारात्-गन्धादेरिः इति इत्यत्पयः ।

## उपमानाच्च ॥ २२ ॥

उपामानात्परस्य गन्धशब्दस्याकारोऽस्येकारो भवति । हंसस्य गमनमिव गमनं यस्याः सा हंसगमना ॥ २२ ॥

## दिक्संख्ये संज्ञायाम् ॥ २३ ॥

दिग्वाच्यसंख्यावाचकशब्दौ संज्ञायां विषये परपदतुल्यार्थे समस्येतेस समासस्तत्पुरुषो भवति । संज्ञायामित्यनेन नित्यसमासः । अन्यस्त्वस्वपदविग्रहोऽपि । दक्षिणाग्निः सप्तग्राम [१]इति ॥२३॥

॥ इति समासप्रक्रिया समाप्ता ॥

## ❀ तद्धितप्रकरणम् ❀

अथ तद्धितो निरूप्यते ।

## अपत्येऽण् ॥ १ ॥

नाम्नोऽपत्यऽर्थे अण् प्रत्ययो भवति । उपगो-

१ पूर्वाव्ययोऽव्ययीभावमादौ तत्पुरुषः स्मृतः चकार बहुलो द्वन्द्वः संख्यापूर्वो द्विगुस्मृतः ॥ यस्य येन बहुव्रीहिः सचासौ कर्मधारयः इति किञ्चित्समासानां लक्षणमीरितम् ।

रपत्यमिति वाक्ये उपगु अण् इति स्थिते समास-प्रत्ययाःइति षष्ठीलोपः । णकारो वृद्ध्यर्थः ॥१॥

## आदिस्वरस्य ञ्णितिच वृद्धिः ॥ १ ॥

स्वराणां मध्ये य आदिस्वरस्तस्य वृद्धिर्भवति ञिति णिति च तद्धिते परतः। उकारस्य औकारो वृद्धिः२

## वोऽव्यस्वरे ॥ ३ ॥

उकारस्यौकारस्य वा अव् भवति यकारे च स्वरे परे । औपगवः । वासिष्ठः। गौतमः [ शिवादि-भ्यश्च वक्तव्यः❋ ] शैवः । वैदेहः ॥ ३ ॥

## ऋ उरणि ॥ ४ ॥

ऋकारस्य उर् भवति अणि परे ॥ ४ ॥

## षषो[1] णो मातरि ॥ ५ ॥

षाण्मातुरः । द्वयोर्मात्रोरपत्यं द्वैमातुरः॥ ५॥

## अत इञनृषे ॥ ६ ॥

---

१ मातुरुत्संख्यासम्भद्रपूर्वायाम् । संख्यादिपूर्वस्य मातृश-ब्दस्य उदादेश स्यात् अणूप्रत्यश्च । तद्धितेष्वचामादेरिति वृद्धिः षाण्मातुरः माद्रमातुरः ।

अकारान्तान्नाम्नाऽनृषिशब्दादपत्येऽर्थे इञ् प्रत्ययो भवति। 'यस्य लोपः' देवदत्तस्यापत्यं दैवदत्तिः। श्रीधरस्यापत्यं श्रैधरिः। दशरथस्यापत्यं दाशरथिः। पुरन्दरस्यापत्यं पौरन्दरिः ॥ ६ ॥

## बह्वादिभ्यश्च ॥ ७ ॥

बह्वादिभ्यः परे इञ् प्रत्ययो भवत्यपत्येऽर्थे। बहोरपत्यं बाहविः। औपगविः कार्ष्णिः। औडुलोमिः आग्निशर्मिः ॥ ७ ॥

## ण्यायनणेयण्णीया गर्गनडात्रिस्त्रीपितृष्वस्रादेश्च ॥ ८ ॥

गर्गादेर्नडादेस्त्र्यादः स्त्री लिंगात् पितृष्वस्रादेश्च ण्य आयनण् एयण् णीय इत्येते प्रत्यया भवन्ति अपत्येऽर्थे। गर्गस्यापत्यं गार्ग्यः। वत्सस्यापत्यं वात्स्यः। नडास्यापत्यं नाडायनः। चरस्यापत्यं चारायणः। अत्रेरपत्यमात्रेयः। गंगाया अपत्यं गांगेयः। मह्या अपत्यं माहेयः। कपेरपत्यं कापेय।

( मातृ पितृभ्यां स्वसुः सस्य षत्वं वक्तव्यम् ) ।
मातृष्वस्रीयः पैतृष्वस्रीयः ॥ ८ ॥

## अलुक् क्वचित् ॥ ९ ॥

अमुष्य अपत्यं आमुष्यायणः ॥ ९ ॥

## पितृमातृभ्यां व्याडुलौ ॥ १० ॥

पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः ॥१०॥

## पितुर्डामहन् ॥ ११ ॥

पितुःपिता पितामहः । पितुर्माता पितामही॥ ११॥

## लुग्बहुत्वे क्वचित् ॥ १२ ॥

अपत्येऽर्थे उत्पन्नस्य प्रत्ययस्य बहुत्वे सति क्वचिदृष्यन्नर्षिविषये लुग् भवति । गर्गा । वसिष्ठः । अत्रयः । विदेहाः ॥ १२ ॥

## देवतेदमर्थे ॥ १३ ॥

देवतार्थे इदमर्थे चोक्ता प्रत्यया भवन्ति । इन्द्रा देवता अस्येति ऐन्द्रं हविः । सोमो देवताऽस्येति सौम्यम् । देवदत्तस्य इदं दैवदत्तं वस्त्रम् ॥ १३ ॥

## क्वचिद्द्वयोः ॥ १४ ॥

पूर्वपदोत्तरपदाद्योः क्वचिद्वृद्धिर्भवति । अग्निमरुतौ देवतेअस्येति आग्निमरुतं कर्म । सुहृदो भावः सौहार्दम् । अत्र [भावे अण् वक्तव्यः ❀] ॥१४॥

## णितो वा ॥ १६ ॥

उक्ताः प्रत्यया विषयान्तरे णितो वा भवन्ति अजोगौर्यस्यसः अजगुःशिवस्तस्येदं धनुःआजगवम् अजगवं वा । कुमुदस्य गन्ध इव गन्धो यस्य स कुमुदगन्धिः तस्यापत्यं स्त्रीकौमुदगन्धा 'आबतः' स्त्रियाम् इत्याप्प्रत्ययः । श्वशुरस्यायं ग्रामः श्वाशुर्यः । विष्णोरिदं वैष्णवम् । गोरिदं गव्यम् । कुलस्य इदं कुल्यम् ॥ १५ ॥

## त्वदन्वदेकत्वे ॥ १६ ॥

तव इदं त्वदीयम् । मम इदं मदीयम् ॥१६॥

## चतुरश्च लोपः ॥ १७ ॥

चतुरशब्दस्य चकारस्य लोपो भवति ययणी ययोः । परतः । तुर्यः तुरीयः ॥ १७ ॥

## अन्यस्य ढक् ॥ १८ ॥

अन्यशब्दस्य दगागमो भवति णीयप्रत्यये परे अन्यस्येदं अन्यदीयम् । अर्धजरत्याइदमर्धरजयम्

## कारकात्क्रियायुक्ते ॥ १९ ॥

कारकदप्येते प्रत्यया भवन्ति क्रियायुक्ते कर्त्तरि कर्मणि ॥ चाभिधेये कुंकुमेन रक्तं वस्त्रं कौकुमम् । मथुराया आगतो माथुरः । ग्रामे भवो ग्राम्यः । धुरं वहतीति धुर्यः धौरेयः ॥ १९ ॥

## केनेयेकाः ॥ २० ॥

क इन् इय् इक् इत्येते प्रत्यया भवन्ति भावाद्यर्थेषु णित्वं चौषां वैकल्पिकम् । कर्णाटे भवः कार्णाटकः कर्णाटको वा । ग्रामादागतस्तत्र जातो वा ग्रामीणः ग्राम्यः । सध्रीचि भवः सध्रीचीनः । समीचि भवः समीचीनः । तिरश्चिभवः तिरश्चीनः ॥२०॥

## यलोपश्च ॥ २१ ॥

क्वचिद्याकारलोपो भवति । कन्यायाः जातः कानीनः । ( नक्षत्रादण् वक्तव्यः ) पुष्येण युक्ता पौर्णमासी पौषी । पौष्यां भवः पौषीणः ।

## इयो वा ॥ २२ ॥

क्षत्रशब्दाद्वा इयप्रत्ययो भवति । क्षतात् त्रायत इति क्षत्रम् । क्षत्रात् भवः क्षत्रियः क्षत्रः । शुक्राज्जातं शुक्रियम् । इन्द्राज्जातं इन्द्रियम् । अक्षैर्दीव्यतीति आक्षिकः । शब्दं करोतीति शाब्दिकः । तर्कं करोतीति तार्किकः । वेदे जातो वैदिकः स्तुतिः ऋग्वा ॥ २२ ॥

## किमादेस्त्यतनौ ॥ २३ ॥

किमादेरद्यादेर्भवाद्यर्थेषु त्यतनौ प्रत्ययौ भवतः कुत्र भवः कुत्रत्यः । कुतस्त्यः । अद्य भवः अद्यतनः । ह्यो भवः ह्यस्तनः । श्वो भवः श्वस्तनः । सदा-भवः सदातनः ॥ ( दक्षिणापश्चात्पुरसस्त्यण् वक्तव्यः ❋ ) दाक्षिणात्यः पाश्चात्यः । पौरस्त्यः ।

## स्वार्थेऽपि ॥ २४ ॥

उक्ताः प्रत्ययाः स्वार्थेऽपि भवन्ति । देवदत्त एव दैवदत्तकः । चत्वार एव वर्णा चातुर्वर्ण्यम् चौर एव चौरः ( भागरूपनामभ्यो धेयः स्वार्थेऽपि ❋ ) भागधेयम् रूपधेयम् नामधेयम् ॥

---

१ एवमेव तार्तीयीकः । द्वैतीयीकः इत्यादि ।

## अणीनयोर्युष्मदस्मदोस्तवकादिः २५

अणीनयोर्युष्मदस्मदोस्तवकादय आदेशा भवन्ति । तव इदं तावकम् । मम इदंमामकम् । तावकीनः मामकीनः । यौष्माकः आस्माकः यौष्माकीणः आस्माकीनः ॥ २५ ॥

## वत्तुल्ये ॥ २६ ॥

सादृश्ये वत्प्रत्ययो भवति । चन्द्रेण तुल्यं चन्द्रवन्मुखम् । घटेन तुल्यं घटवदुदरम्! पटवत्कंवलम् २६

## भावे तत्वयणः ॥ २७ ॥

शब्दस्य प्रवृत्तिनिमित्तंभावस्तस्मिन्भावे तत्वयण् इत्येते प्रत्यया भवन्ति । ब्राह्मणस्य भावा ब्राह्मणता । तान्तस्य नित्यस्त्रीलिंगत्वादाप् ॥ २७ ॥

## समाहारे ता च त्रेर्गुणश्च ॥२८॥

त्रयाणां समाहारस्त्रेता । जनानां समूहो जनता त्वयणौ नपुंसकलिंगौभवतः । ब्राह्मणत्वम्ब्राह्मण्यम् सुमनसो भावः सौमनस्यम् । सुभगस्य भावः सौभाग्यम् । विदुषो भावः वैदुष्यम् । ( कर्मण्यपि यण्

वक्तव्यः*) ब्राह्मणस्य कर्म ब्राह्मण्यम् । राज्ञ इदं कर्म राज्यं राजन्यम् ॥ २८ ॥

## लोहितादेर्डिमन् ॥ २९ ॥

लोहितादेर्भावेऽर्थे इमन्प्रत्ययो भवति स च डित् डित्वाट्टिलोपः । लोहितस्य भावो लोहितिमा । अणो-र्भावोऽणिमा । लघोर्भावो लघिमा । महतो भावो महिमा ॥ २९ ॥

## ऋ र इमनि ॥ ३० ॥

ऋकारस्य रेफो भवति इमनि परे । प्रथिमा । द्रढिमा । बहोर्भावे इति विग्रहे ॥ ३० ॥

## बहोरिल्लोपो भू च बहोः ॥३१॥

बहोरुत्तरेषामिमनादीनामिकारस्य लोपो भवति । बहोःस्थाने भू चादेशः । बहोर्भावो भूमा[1] ॥३१॥

## अस्त्यर्थे मतुः ॥ ३२ ॥

नाम्नो मतुप्रत्ययो भवति । अस्यास्मिन्वास्ती त्येतस्मिन्नर्थे उकारोनुम्विधानार्थः 'वृतोनुम्' गोमान् श्रीमान् । गोमती । श्रीमती । आयुष्मान् । ३२ ।

१ पृथ्वादीनामिमनादेशः । प्रथिमा म्रदिमा द्रढिमा क्रशिमा इत्यादि ।

## अइकौ च मत्वर्थे ॥ ३३ ॥

मत्वर्थे अइकौ प्रत्ययौ भवतः । वैजयन्ती पताका अस्य अस्मिन् वा वैजयन्तः प्रासादः । माया विद्यते अस्यास्मिन्वा मायिकः ॥ ३३ ॥

## मान्तोपधाद्वत्विनौ ॥ ३४ ॥

मकारान्तान्मकारोपधादकारान्तादकारोपधाच्च वात्विनौ प्रत्ययौ भवतोऽस्त्यर्थे । किंवान् लक्ष्मीवान् भगवान् । धनी दण्डी छत्री । दृषद्वती भूमिः । शमी कामी ॥ ३४ ॥

## तडिहादिभ्यश्च ॥ ३५ ॥

एभ्यो वतुप्रत्ययो भवति । तडित्वान् विद्युत्वान् मरुत्वान् ॥ ३५ ॥

## एतत्कियत्तद्भ्यःपरिमाणे वतुः ॥३६॥

## यत्तदोरा ॥ ३७ ॥

यत्तदोष्टेरात्वं भवति वतौ परे । यत्परिमाणो यावान् तावान् ॥ ३७ ॥

## किमः कियंश्च ॥ ३८ ॥

किम्शब्दस्य किरादेशो भवति वतौ[१] परे। चकारात्प्रत्ययस्य वकारस्य च यकारो भवति। कियान् ३८

## आइश्चैतदो वा ॥ ३९ ॥

वतुप्रत्यये परे एतत् शब्दस्य आ इश् इत्येतावादेशौ भवतः। 'गुरुःशिच्च' इति शित्वात्कृत्स्नस्य। आ इति गुरुस्तथापि चकारादन्तस्यैव टेराकारादेशो भवति न कृत्स्नस्य। यस्मिन् पक्षे इयादेशस्तस्मिन्पक्षे प्रत्ययस्य वकारस्य यकारादेशो भवति। एतावान् इयान्।

## तुन्दादेरिलः ॥ ४० ॥

तुन्दादेरिलप्रत्ययो भवति अस्त्यर्थे तुन्दमस्यास्तीति तुन्दिलः ॥४०॥

## औन्नत्ये दन्तादुरः ॥ ४१ ॥

औन्नत्येऽर्थे वाच्ये सति दन्तशब्दादुरःप्रत्ययो भवति उन्नता दन्ता यस्य सः दन्तुरः। (ऐश्वर्येऽर्थे स्वस्मादामिन्) स्वामी (गन्धदेरिः) सुगन्धिः आमगन्धिः ४१

१ क्वचिदप्रत्ययो णिदपि। प्रज्ञास्यास्तीति प्राज्ञः श्राद्धः चकारग्रहणात् राजन्वान्। राजवन्तीसौराज्ये ॥ उदन्वान्घःउदधि।

## श्रद्धादेर्लुः ॥ ४२ ॥

श्रद्धादेर्गणाल्लुप्रत्ययर्थो भवति । श्रद्धास्यास्तीति श्रद्धालुःदयालुः । ( असमायामेधास्रग्भ्योऽस्त्यर्थे विन् वक्तव्यः ) ततोऽस्यास्तीति तपस्वी । यशस्वी मायावी मेधावी स्रग्वी ❋ ॥ ४२ ॥

## वाचो ग्मिनिः ॥ ४३ ॥

वाग्मी ॥ ४३ ॥

## आलाटौ कुत्सितभाषिणि ॥ ४४ ॥

वाचालः । वाचाटः ॥ ४४ ॥

## ईषदपरिसमाप्तौकल्पदेश्यदेशीयाः ।

ईषदपरिसमाप्तः सर्वज्ञः सर्वज्ञकल्पः पटुदेस्यः कविदेशीयः ॥ ४५ ॥

## प्रशंसायां रूपः ॥ ४६ ॥

प्रशस्तो वैयाकरणो वैयाकरणरूपः ॥ ४६ ॥

## पाशः कुत्सायाम् ॥ ४७ ॥

कुत्सितो वैयाकरणो वैयाकरणपाशः ॥४७॥

---

❋ चूडादिभ्यो लप्रत्ययः, मांसलः इत्यादि ।

## भूतपूर्वे चरट् ॥ ४८ ॥

दृष्टचरः । दृष्टचरी ॥ ४८ ॥

## प्राचुर्यविकारप्रधान्यादिषुमयट् ।४९।

अन्नं प्रचुरं यस्मिन् सः अन्नमयो यज्ञः । मृन्मयो घटः । स्त्रीमयो जाल्मः । अमृतमयश्चन्द्रः ( तदधीते वेदवत्यत्राण् वक्तव्यः ❀ ) व्याकरण मधीते वेद वा वैयाकरणः । शोभनः अश्वः स्वश्वः तं वेदेति सौवश्वः ।

## नसन्धिय्वौर्युट्च ॥ ५० ॥

संधिजौ य्वौ संधिय्वौ तयोः संधिजयोर्यकार वकारयोः सम्बन्धिनः स्वरस्य वृद्धिर्नभवति किन्तुत-योर्युडागमो भवति तेन इट् उट् इत्येतावागमौ भवतः वर्णविश्लेषं कृत्वा यकारात्पूर्वमिकारः । वकारा-त्पूर्वमुकारः । ( स्वरहीनं परेण संयोज्यम् आदि स्वरस्य ञ्णिति च वृद्धिः वैयाकरणः सौवः ।५०।

## इतो जातार्थे ॥ ५१ ॥

लज्जा संजाता यस्यासौ लज्जितः । पंडितः तृषितः ।

## तरतमेयस्विष्ठाः प्रकर्षे ॥ ५२ ॥

अतिशयेऽर्थेतरतम ईयसुइष्ठइत्येते प्रत्ययाभवन्ति। अतिशयेन कृष्णः कृष्णतरः। अतिशयेन शुक्लः शुक्लतमः॥ (ईयस्विष्ठौडिताविति वक्तव्यौ) डिति टेर्लोपः उकारो नुग्विधानार्थः। 'न्सम्महतऽ' इति दीर्घः। अतिशयेन लघुःलघीयान् लघिष्ठऽलघीयसी। अतिशयेन पापः पापिष्ठः पापीयान् पापीयसी।

## गुर्वादेरिष्ठेमेयस्सु गरा-
## दिष्टिलोपश्च ॥ ५३ ॥

१गुरु २ प्रिय ३ स्थिर ४ स्फिर ५ उरु ६ वहुल ७ बृद्ध ८ दीर्घ ९ प्रशस्य १० वाढ ११ युवन् १२ अल्प १३ स्थूल १४ दूर १५ अन्तिकानां क्रमेण १ गर २ प्र ३ स्थ ४ स्फ वर ६ वंहि ७ ज्या ८ द्राघ ९ श्र १० साध ११ यव १२ कन १३ स्थव १४ दव १५ नेद एते आदेशा भवन्ति। अतिशयेन प्रियः प्रेयान्प्रेष्ठः प्रेमा। अतिशयेन स्थिरःस्थेयान् स्थेष्ठःस्थेमा। अतिशयेन उरुःवरीयान् वरिष्ठः। अतिशयेन स्फिरःस्फेयान्।

इष्ठस्येकारस्यापि भवति । श्रेष्ठ । अतिशयेन बहुःभूयिष्ठः । ईयस इलोपः । भूयान् भूयसी । दूरस्य दवादेशः । दवीयान् दवीयसी दविष्ठः क्षिप्रशब्दस्य क्षेपादेशः क्षेपीयान् क्षेपिष्ठः क्षुद्रशब्दस्य क्षोपादेशः क्षेदीयान् ॥ ५३ ॥

## बहोरिष्ठेयिः ॥ ५४ ॥

बहोरुत्तरस्येष्ठप्रत्ययस्येकारस्य यिर्भवति बहोः स्थाने भूश्चादेशः । भूयान् भूयिष्ठः ॥ ( किमोऽव्यया दाख्याताच्च तरतमयो राम्वक्तव्यः ❀ ) कुतस्तरा परमाणवः कुतस्तमां तेषामारम्भकत्वम् । उच्चैस्तरां गायति । पठतितमाम् ॥ ५४ ॥

## अव्ययसर्वनाम्नामकच्प्राक्टेः ॥५५॥

उच्चैकः यकः सकः सर्वकः ॥ ५५ ॥

## परिमाणे दघ्नादयः ॥ ५६ ॥

परिमाणेऽर्थे दघ्नट् द्वयसट् मात्रट् इत्येते प्रत्यया भवन्ति । जानुदघ्नं जलम् । शिरोद्वयसम् । पुरुषमात्रम् [ द्वयोर्बहूनां चैकस्य निर्धारणे किमादिभ्यो डतरडतमौ वक्तव्यौ । ❀ ] कतरो

भवतां काशवः । कतमो भवतां तान्त्रिकः । भवतोर्यतरस्तार्किकस्ततर उद्गृह्णातु ॥ ५६ ॥

## संख्येयविशेषावधारणे द्वित्रिभ्यां तीयः

द्वयोः संख्यापूरकः द्वितीयः [त्रेः संप्रसारणम् त्रयाणां संख्यापूरः तृतीया ॥ ५७ ॥

## षट्चतुरोःस्थट् ॥ ५८ ॥

षष्ठः चतुर्थः ॥ ५८ ॥

## पञ्चमादेर्मट् ॥ ५९ ॥

पञ्चमः सप्तमः अष्टमः नवमः ॥ ५९ ॥

## विंशतेस्तिलोपो डिति ॥ ६०

विंशः विंशतिमः ॥ ६० ॥

## विंशत्यादेर्वा तमट् ॥ ६१ ॥

विंशतिः विंशतिमः ॥ ६१ ॥

## शतादेर्नित्यम् ॥ ६२ ॥ ॥

शततमः ॥ ५२ ॥

## एकादशादेर्डच् ॥ ६३ ॥

एकादशः । ( द्वित्र्यष्टादीनां द्वा त्रयोऽष्टाः ) द्वादशः त्रयोदशः अष्टादशः ॥ ६३ ॥

## कतिकतिपयाभ्यां थः ६४ ॥

कथितः कतिपयथः ॥ ६४ ॥

**संख्यायाः प्रकारे धा ॥ ६५ ॥**

द्विप्रकारं द्विधा । चतुर्धा । गुणोऽण् च । द्वैधा त्रैधा णित्वात् वृद्धिः 'यस्य लोपः, ॥ ६५ ॥

**अतोम् ॥ ६६ ॥**

द्वैधम् त्रैधम् ॥ ६६ ॥

**क्रियाया आवृत्तौ कृत्वस् ॥ ६७ ॥**

पंक्तित्वः सप्तकृत्वः ॥ ६७ ॥

**द्वित्रिभ्यां सुः ॥ ६८ ॥**

द्वि विरक्तम् ॥ ६८ ॥

**बह्वादेः शस् ॥ ६९ ॥**

बहुशः शतशः ॥ ६९ ॥

**तयायटौ संख्यायाम् ॥ ७० ॥**

द्वितयम् त्रितयम् द्वयम् त्रयम् ॥ ७० ॥

**शेषा निपाताः कत्यादयः ॥ ७१ ॥**

का संख्या येषां ते कति ॥ ७१ ॥

* इति तद्धितप्रक्रिया समाप्ता *



पुस्तक मिलने का पता—

**बाबू ठाकुर प्रसाद गुप्त बुकसेलर,**

ब्रान्च-राजादरवाजा-कचौड़ी गली, बनारस सिटी ।

बाबू बनारसी प्रसाद वर्म्मा-वर्म्मन प्रेस, लाहौरी टोला काशी ।